देवमेकं हि जगतः सृष्टिस्थित्यन्तकारिणम् ।
त्रिलोक्यात्मतया सर्वः शान्तिमोक्षाभिधां व्रजेत् ॥३९२॥
आनन्दात्मानमद्वैतं यस्तं परममङ्गलम् ।
जानीते स तु मोक्षस्थो दुःखं नैति कदाचन ॥३९३॥
सर्वान्तरमुपादानं ज्ञात्वा तं परमेश्वरम् ।
मृत्युपाशाँस्तु कामादींश्छिनत्त्येव न संशयः ॥३९४॥
सर्वभूतेषु यो गूढो ज्ञात्वा तं शिवमद्वयम् ।
पाशाः सर्वे प्रहीयन्ते कामक्रोधादिनिर्मिताः ॥३९५॥
अक्षरं ब्रह्मज्ञानं स्यादक्षरं विषयं यतः ।
अमृतं मोक्षहेतुत्वाद्विद्या स्याच्च यथार्थतः ॥३९६॥
देवाश्च मुनयो येऽन्ये ब्रह्माहमिति देहिनः ।
तद्विदुस्तन्मया भूत्वा तेऽमृतत्वं हि भेजिरे ॥३९७॥
ब्रह्मविज्ञान उत्पन्ने बुद्ध्युपाधिपरिक्षयात् ।
स एवानन्तरूपः स्याज्जीवो ब्रह्मात्मरूपतः ॥३९८॥
अनाद्यनन्त एवायं सूक्ष्मोऽखिलबीजस्थितः ।
चिदानन्दात्मनस्तस्य नास्ति नाशो जनिस्तथा ॥३९९॥
अस्य विज्ञानतः पाशच्छेदः श्रुत्या समीरितः ।
सर्वान्पाशानयं छित्त्वा विद्वान् जन्मादिवर्जितः ॥४००॥
य एनं परमात्मानं ज्ञातवन्तो मुनीश्वराः ।
बन्धं देहात्मकं तेऽत्र त्यक्तवन्तो यतीश्वराः ॥४०१॥

स्वात्मज्ञानाग्निना दाहः कर्मणां भवति यदा ।
तदा ज्ञानबलाद्याति स्वात्मरूपं परं महत् ॥४०२॥
अत एव विजानीमो वयं वेदप्रमाणतः ।
पुरुषो ब्रह्म विज्ञाय कृतकृत्यः प्रजायते ॥४०३॥
तमेवात्मस्वरूपेण ज्ञात्वा विद्वानवाप्नुयात् ।
मृत्युं संसारमुल्लङ्घ्य ईशभावञ्च गच्छति ॥४०४॥
यथा जागरणज्ञानात्स्वप्नः सर्वः प्रलीयते ।
तथाऽऽनन्दात्मविज्ञानात् प्रपञ्चोऽपि विलीयते ॥४०५॥
इदं पवित्रं ब्रह्मात्मविज्ञानं मोक्षकारणम् ।
मोक्षार्थिभिः सदा सद्भिर्मुनिसङ्घैर्निषेवितम् ॥४०६॥
आत्मज्ञानान्न पापानि स्पृशन्तीह कदाचन ।
अनेकदुःखकर्तॄणि ब्रह्महत्यादिकान्यपि ॥४०७॥
एवं ब्रह्माद्वितीयस्य चिदानन्दात्मरूपिणः ।
साक्षात्कृतिर्भवेद्यस्य दुःखं नैनं समाप्नुयात् ॥४०८॥
अहं ब्रह्मेति वाक्यार्थसाक्षात्कृतिमुपेयिवान् ।
आनन्दात्मसुखं प्राप्तो यो ब्राह्मणेषु महान्सः ॥४०९॥
सर्वाधारं परं ब्रह्म निर्विशेषं सदक्षरम् ।
दृश्याद्विलक्षणं ज्ञात्वा परे ब्रह्मणि लीयते ॥४१०॥
मायाकल्पितजीवेशौ भोक्तृभोग्यादिकल्पनाम् ।
यदा ब्रह्मैव जानाति कृतकृत्यस्तदा भवेत् ॥४११॥

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद् ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥४१२॥
निर्विकल्पमनन्तञ्च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनाद्यञ्च ज्ञात्वाऽऽप्नोति परं शिवम् ॥४१३॥
एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयाद् व्यतीतं तं ज्ञात्वा पुनर्न जायते ॥४१४॥
निष्कलं निर्मलं शान्तं तद् ब्रह्माहमिति स्मरन् ।
ज्ञाननेत्रं समादाय परं ब्रह्माधिगच्छति ॥४१५॥
यस्मिन्सर्वाणि भूतानि सूत्रे मणिगणा इव ।
समर्पितानि तं ज्ञात्वा ब्रह्मविद् ब्रह्मणि स्थितः ॥४१६॥
चित्ते ह्यादर्शवद्यस्माच्छुद्धे विद्या प्रजायते ।
उत्पन्नायां तु विद्यायां ब्रह्मरूपेण तिष्ठति ॥४१७॥
आत्मानं ब्रह्म यो वेद सर्वाधारं परं विभुम् ।
स्वयंज्योतिःस्वभावं हि स्वात्मतयोपगच्छति ॥४१८॥
यतो वाचो निवर्तन्ते ह्यप्राप्य मनसा सह ।
जीवस्यैष किलानन्दो यं ज्ञात्वा मुच्यते बुधः ॥४१९॥
सदारामोऽहमित्येतत्तत्त्वतः प्रविदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः ॥४२०॥
य एवं वेद स मुक्तो भरद्वाजं प्रति किल ।
परमार्थमिदं ज्ञानं याज्ञवल्क्यो हि प्रोक्तवान् ॥४२१॥

काष्ठेषु च यथैवाग्निस्तैलं यथा तिलेषु च ।
सर्वगतं तथात्मानं विज्ञायामृतमश्नुते ॥४२२॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिव स्थितम् ।
सर्वस्य जगतो मूलं जीवो ज्ञात्वा विमुच्यते ॥४२३॥
यत्पूर्णानन्दैकरसं सच्चिदद्वयरूपकम् ।
तद्ब्रह्माहमितिज्ञात्वा कृतकृत्यो भवेदिह ॥४२४॥
आनन्दात्मानमभयं सर्वदा हृदयस्थितम् ।
पक्षपातविनिर्मुक्तं ब्रह्म ज्ञात्वा भवेद्धि तत् ॥४२५॥
निर्विकल्पमनन्तञ्च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिश्च यज्ज्ञात्वा मुच्यते बुधः ॥४२६॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तत्त्वावित्तत्परिज्ञाय प्राप्नोति ब्रह्म निर्भयम् ॥४२७॥
एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥४२८॥
एवं रूपं विजानात्यवस्थात्रयविलक्षणम् ।
साक्षात्कृतात्मा स विद्वान् ब्रह्म सम्पद्यते ध्रुवम् ॥४२९॥
एकरूपतया ब्रह्म यो विजानात्यहंत्विति ।
सकृज्ज्ञानेन मुक्तिः स्याद् ब्रह्मरूपतया स्थितिः ॥४३०॥
एवञ्चेज्ज्ञायते पुंसा वेदवाक्यं गुरोः सदा ।
सम्वीक्ष्य एक एवात्मा जाग्रत्स्वप्नसुषुप्तिषु ॥४३१॥

स्थानत्रयव्यतीतो यो वर्तते सर्वदेहिनाम् ।
स्थानत्रयव्यतीतस्य ज्ञाता सोऽपि तथा भवेत् ॥४३२॥
अद्वयं ब्रह्म यो वेद स कृत्वा सारथिधियम् ।
दुःखापहां स्वबोधाख्यां सोऽहमस्मीतिरूपिणीम् ॥४३३॥
प्रग्रहञ्च मनः कृत्वा देहरूपरथे स्थितः ।
इन्द्रियाश्वैर्भृशं दान्तैर्गच्छेद्विष्णुपरं पदम् ॥४३४॥
ब्रह्मविज्ञान उत्पन्ने संशयादिविवर्जिते ।
मुच्यते स्वं स विज्ञाय जन्मसंसारबन्धनात् ॥४३५॥
आनन्दात्मानमद्वैतं सर्वबुद्धिप्रकाशकम् ।
एनमात्मतया जानन्न दुःखं किञ्चनाव्रजेत् ॥४३६॥
अपूर्वमपरं ब्रह्म स्वात्मानं सत्यमद्वयम् ।
प्रज्ञानघनमानन्दं यः पश्यति स मुच्यते ॥४३७॥
अशरीरं शरीरेषु महान्तं विभुमीश्वरम् ।
आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥४३८॥
यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा ॥४३९॥
यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत् कृत्स्नं तदा भवति निर्वृतिः ॥४४०॥
आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः ।
शुद्धे चित्ते क्रमाज्ज्ञानात् त्रुट्यन्ते ग्रन्थयः स्फुटम् ॥४४१॥

आचार्यः परमं तत्त्वं सच्चिदानन्दमद्वयम् ।
उपदिशेत्प्रत्यग् ब्रह्म यज्ज्ञात्वामृतमश्नुते ॥४४२॥
सोऽहमित्युच्चरेद्यस्तु हंसमन्त्रं निरन्तरम् ।
सोऽयं सोऽहमिति ज्ञानात् परमं ब्रह्म प्राप्नुयात् ४४३॥
चतुर्विंशतितत्त्वानि ब्रह्माहमितिनिश्चयात् ।
त्यक्त्वा जीवः समूलानि जीवन्मुक्तो भवत्यनु ॥४४४॥
जीवन्मुक्ताभिमानस्य त्यागानन्तरमेव हि ।
अद्वयानन्दरूपो यः परात्मा भवति स्वयम् ॥४४५॥
निष्प्रतियोगिका खण्डानन्दैकरसचिद्घनम् ।
सगुणनिर्गुणातीतं ज्ञात्वा देवं विमुच्यते ॥४४६॥
सर्वोपद्रवसिद्धं हि ब्रह्म निष्प्रतियोगिकम् ।
इति ज्ञानस्य ज्ञात्रादित्रिपुटी ग्रासकृत्वतः ॥४४७॥
अस्तिनास्तिविकल्पस्यासम्भवप्रतिबोधतः ।
सिद्धं विद्वान् परं ज्योतिः स्वमात्रमवशिष्यते ॥४४८॥
बहिर्गतेऽपि मनसि द्वैतमिथ्यात्वबोधतः ।
भेदाभावान्निरावरणसदानन्दमनु भवन् ॥४४९॥
ब्रह्मविद्भवति ब्रह्म द्वैताद्वैतविवर्जितम् ।
निर्विशेषं परिपूर्णमखण्डं नित्यचिद्घनम् ॥४५०॥
आत्मज्ञानमुपदिशन्प्रजापतिः सुरान्प्रति ।
त्रिदशानां परीक्षायै फलं ज्ञानस्य पृष्टवान् ॥४५१॥

अनावृतं स्वप्रकाशमात्मानं निर्द्वयं सुराः ।
अहं स एव सोऽहं च पश्यतानन्दविग्रहम् ॥४५२॥
भवतामात्मनो ज्ञानात्क्षीणा दुर्वासना यदा ।
तदा भवन्तस्तद् ब्रह्म भविष्यन्ति न संशयः ॥४५३॥
यदायमहमस्मीति ज्ञायते द्वयवर्जितः ।
आत्मा तदा न कोऽप्येष भेदो भाति स्वयंप्रभे ॥४५४॥
तत्त्वरूपतया ज्ञात आनन्दात्माऽत्र मुक्तिदः ।
यूयं सर्वात्मबोधेन सर्वभेदविवर्जिताः ॥४५५॥
आनन्दात्मा स्वयंज्योतिर्मया वः परिकीर्तितः ।
निर्दुःखो निर्द्वयस्तेन विज्ञातेन फलं हि किम् ॥४५६॥
एवमुक्ते सुराः प्राहुः ब्रह्माणं स्वगुरुं प्रति ।
आत्मैव किलविज्ञातः फलं नान्यद्धि किञ्चन ॥४५७॥
फलात्मन्यात्मनि ज्ञाते नैव किञ्चित्फलान्तरम् ।
अस्माकं विद्यते यस्मान्न फलेऽस्ति फलान्तरम् ॥४५८॥
परीक्षां कुरु माऽतस्त्वं कृतार्था हि वयं कृताः ।
त्वया तुभ्यं नमस्तेऽस्तु चिदानन्दात्मदाय हि ॥४५९॥
ज्ञानज्ञेयादि द्वैतस्य बाधावधि यदद्वयम् ।
तद्ब्रह्मास्मीति यो वेद जीवन्मुक्तो भवेद्धि सः ॥४६०॥
निष्प्रतियोगिकं ब्रह्म प्रत्यग्रूपं विनिश्चितम् ।
यो वेद परमात्मानं स परमात्मा भवेदिह ॥४६१॥

ब्रह्माधिष्ठानज्ञानेन लेपगन्धं प्रहास्य च ।
भवसागरपारं यल्लीलयैति परं पदम् ॥४६२॥

प्रपञ्चविलयाधारं स्वाभिन्नासम्भवञ्च यत् ।
ब्रह्म तन्मात्रज्ञानेन स्वमात्रमवशिष्यते ॥४६३॥

विश्वादिभेदाभिन्नं यदज्ञदृष्ट्यैव कल्पितम् ।
विद्वद्दृष्ट्या विलीनं तद्विद्वान्ब्रह्मावशिष्यते ॥४६४॥

ज्ञातं येन निजं रूपं केवलात्मस्वरूपकम् ।
असौ दोषैर्विनिर्मुक्तः कृतकृत्यो भवेदिह ॥४६५॥

विद्वान् हि सर्वदा मुक्तः संसारभ्रमवर्जितः ।
परिपूर्णस्वरूपं यत्सत्यं ब्रह्म भवेद्धि सः ॥४६६॥

कर्तव्यं नैव तस्यास्ति कृतेनासौ न लिप्यते ।
जीवन्मुक्तः सदास्वच्छः सर्वदोषविवर्जितः ॥४६७॥

यथा वार्यतिरेकेण नैवास्ति बुद्बुदादिकम् ।
तथा ब्रह्मातिरेकेण नास्ति देहादिकं जगत् ॥४६८॥

इति निश्चयवान् ज्ञानी विदेहमुक्त उच्यते ।
परदृष्ट्या देहादीनां प्रतिभाने तु सत्यपि ॥४६९॥

यद्वन्मृदि घटभ्रान्तिः शुक्तौ वा रजतस्य हि ।
तद्वद्ब्रह्माणि जीवत्वं वीक्षमाणो विनश्यति ॥४७०॥

श्रुत्याचार्यप्रसादेन ज्ञानं प्राप्याधिकारिणः ।
कैवल्यं ब्रह्ममात्रावस्थानरूपं प्रयान्ति ते ॥४७१॥

सर्वसाक्षिणमात्मानं वर्णाश्रमविलक्षणम् ।
ब्रह्मरूपतया पश्यन् ब्रह्मैव भवति स्वयम् ॥४७२॥

भासमानमिदं सर्वं भानस्वरूपमेव तत् ।
पश्यन् वेदान्तमानेन सद्य एव विमुच्यते ॥४७३॥

त्रिधामसाक्षिणं शुद्धं निर्विशेषाद्वयं परम् ।
त्वमहंशब्दलक्ष्यार्थमसक्तं सर्वदोषतः ॥४७४॥

सत्यज्ञानानन्दपूर्णलक्षणं तमसः परम् ।
ब्रह्मानन्दं सदा पश्यन् कथं बध्येत कर्मणा ॥४७५॥

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मनो रूपं न बिभेति कुतश्चन ॥४७६॥

ब्रह्मविज्ञानसम्पन्नः प्रतीतमखिलं जगत् ।
पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥४७७॥

अच्युतोऽहमचिन्त्योऽहमसङ्गोऽजोऽस्म्यहमिति ।
स्वस्वरूपपरिज्ञानात् कर्मभिर्न स बध्यते ॥४७८॥

यं शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् ।
परमार्थैकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥४७९॥

स्वस्वरूपतया वेद ब्रह्माद्वयं विनिश्चितम् ।
स वेद्यैकस्वरूपत्वात् सर्वात्मत्वेन तिष्ठति ॥४८०॥

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥४८१॥

एवं विद्वाननुभवन्नात्मानं व्यापिनं भृशम् ।
स्वानुभवानुसारेण व्यनक्ति कृतकृत्यताम् ॥४८२॥

सर्वावस्थानुस्यूतात्मा साक्षी प्रत्यक्स्वरूपकः ।
अहं ब्रह्मेति विज्ञानं मोक्षहेतुर्महात्मनाम् ॥४८३॥

अहिनिर्ल्वयनी सर्पनिर्मोको जीववर्जितः ।
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥४८४॥

प्रत्यग्ज्ञानशिखीध्वस्ते मिथ्याज्ञाने सहेतुके ।
स्थूलं सूक्ष्मं तथा देहं विद्वान्नैवाभिमन्यते ॥४८५॥

अद्यास्तमेतु वपुराशशितारमास्तां
कस्तावतापि मम चिद्वपुषो विशेषः ।
कुम्भे विनश्यति चिरं समवस्थिते वा,
कुम्भाम्बरस्य नहि कोऽपि विशेषलेशः ॥४८६॥

न हि नानास्वरूपं स्यादेकं वस्तु कदाचन ।
तस्मादखण्ड एवास्मि यन्मदन्यन्न किञ्चन ॥४८७॥

दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् ।
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ॥४८८॥

सत्यं ज्ञानमनन्तं यत्परं ब्रह्म भवामि तत् ।
एवं यो वेद तत्त्वेन मुक्त एव न संशयः ॥४८९॥

मुक्तरूपोऽप्यसौ विद्वान् ब्रह्मज्ञानादनन्तरम् ।
मुक्तिं ज्ञापयति ब्रह्म निर्विशेषतया स्थितिम् ॥४९०॥

आनन्दरूपोऽहमखण्डबोधः
परात्परोऽहं घनचित्प्रकाशः ।
मेघा यथा व्योम न च स्पृशन्ति
संसारदुःखानि न मां स्पृशन्ति ॥४९१॥
सर्वं सुखं विद्धि सुदुःखनाशात्,
सर्वं च सद्रूपमसत्यनाशात् ॥
चिद्रूपमेव प्रतिभाति यत्तत्
तस्मादखण्डं मम रूपमेतत् ॥४९२॥
नहि जनिर्मरणं गमनागमौ
न च मलं विमलं न च वेदनम् ।
सकलमेव चिदेव विराजते
स्फुटतरं परमस्य हि ज्ञानिनः ॥४९३॥
केनाप्यबाधितत्वेन त्रिकालेऽप्येकरूपतः ।
सत्योऽहं नित्यरूपोऽहं सुप्तौ दृष्टसुखात्मकः ॥४९४॥
न कर्ता नैव भोक्ता च न च भोजयिता तथा ।
केवलं चित्सदानन्द ब्रह्मैवाहं जनार्दन ॥४९५॥
दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्त ओम् ॥४९६॥

इत्यादिवचनैः सिद्धोऽद्वयब्रह्मतया स्थितिः ।
विदुषोऽनुभवसिद्धा मुक्तिर्ज्ञानफलात्मिका ॥४९७॥
अव्ययानन्दविज्ञानघनोऽस्म्यहमविक्रियः ।
एवं ब्रह्मात्मविज्ञानात् शोकस्यान्तं हि गच्छति ॥४९८॥
मनोवृत्तिसहस्राणां भावाभावप्रकाशकम् ।
प्रत्यग् ब्रह्माहमस्मीति ह्यनुभूय मुक्तो भवेत् ॥४९९॥
तिलेषु तैलं हुतभुक् समित्सु
यः सर्वदेहेष्वनुवर्तमानः ।
तं प्रत्यगात्मानमपाररूपं
विज्ञाय धीरो न च मृत्युमेति ॥५००॥
निष्कलङ्को निराख्यातो निर्विकल्पो निरञ्जनः ।
शुद्धो नारायणो देव एक एवाद्वितीयकः ॥५०१॥
भूतं भवद्भविष्यच्च सर्वं नारायणः किल ।
एवं हि यो विजानाति भवेन्नारायणो ह्यसौ ॥५०२॥
यत्पूर्णानन्दैकरसं शुद्धबोधैकविग्रहम् ।
तद्ब्रह्मैवाहमस्मीति विद्वान् कृतकृत्यो भवेत् ॥५०३॥
कामरागादिहीनो यः शमदमादिसंयुतः ।
तृष्णाशामोहमात्सर्यदम्भाहङ्कारवर्जितः ॥५०४॥
अशेषकल्पनाधारं सर्वान्तर्यामिणं परम् ।
व्योमवद् व्यापिनं नित्यं प्रमाणावेद्यमुत्तमम् ॥५०५॥

जातिगुणक्रियाहीनं षडूर्मिभिर्विवर्जितम् ।
षड्भावविक्रिया हीनं सर्वदोषविवर्जितम् ॥५०६॥
सत्यंज्ञानमथानन्दमनन्तं निर्विकल्पकम् ।
अपरोक्षतयावेद्यं स्वस्यैवानुभवेन हि ॥५०७॥
अखण्डाद्वयमात्मानं विज्ञाय ह्यपरोक्षतः ।
कृतकृत्यतया तृप्तो जीवन्मुक्तः स ब्राह्मणः ॥५०८॥
स्वभिन्नं कृतकं सर्वं विज्ञाय नश्वरमिति ।
विरक्तः सर्वदा ब्रह्माहमेवेति विमुच्यते ॥५०९॥
स्वभिन्नं वेदितव्यञ्च नैवास्ति यस्य किञ्चन ।
जीवन्मुक्तः स विज्ञेयः कृतकृत्यो भवेत्किल ॥५१०॥
अहं ब्रह्मेति विज्ञानात् परिक्षीणात्मबन्धनाः ।
एते ब्रह्मात्मविज्ञानाद्ब्रह्मीभूता यतीश्वराः ॥५११॥
यथा ज्वलन्महावह्निः शुष्कमार्द्रञ्च निर्दहेत् ।
तथा शुभाशुभं कर्म तेषां ज्ञानाग्निरप्ययम् ॥५१२॥
ब्रह्मात्मता तदा तस्य जीवस्य हि भविष्यति ।
आनन्दात्मानमात्मस्थं यदायमवलोकयेत् ॥५१३॥
आत्मनो ब्रह्मरूपत्वमसकृत् कथितं पुरा ।
पुनश्च वक्ष्यते तद्यत्कृतार्थो ज्ञानतो भवेत् ॥५१४॥
आनन्दात्मानमद्वैतं स्वयंज्योतिः स्वरूपकम् ।
विजानाति यदा जीवो ब्रह्मैव भवति तदा ॥५१५॥

अथ चेद् ज्ञायते पुंसा सर्वभेदविवर्जितः ।
आत्मा तस्मिन् हि विज्ञाते भेदभ्रमो निवर्तते ॥५१६॥
नान्तःप्रज्ञं बहिःप्रज्ञं स्थूलसूक्ष्मविवर्जितम् ।
ज्ञानाज्ञानविहीनं यदुभयतः प्रज्ञं न च ॥५१७॥
अग्राह्यमव्यवहार्यं स्वान्तःस्वयमवस्थितम् ।
एवं हि यो विजानाति मुक्तो भवत्यसंशयम् ॥५१८॥
कार्यकारणहीनो यः स्वप्रकाशमयश्च यः ।
ब्रह्मानन्दमयो नित्यो निर्विकल्पो निरञ्जनः ॥५१९॥
शुद्धो देवो निराख्यात एको द्वितीयवर्जितः ।
समानाधिकशून्यो नारायणः परमार्थतः ॥५२०॥
एवं यो वेद सम्बन्धान् छित्त्वा सर्वानशेषतः ।
तीर्त्वा मृत्युं भवेन्मुक्तो ह्यत्र नैवास्ति संशयः ॥५२१॥
ब्रह्मज्ञानाग्निना विद्वान् दग्ध्वा कर्माख्यबन्धनम् ।
जले जलमिव क्षिप्तमात्मरूपोऽवतिष्ठते ॥५२२॥
दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चेत्तदोत्पन्ना परा निर्वाणनिर्वृतिः ॥५२३॥
ये शुद्धवासनाभूयो न जन्मानर्थभागिनः ।
ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥५२४॥
गुरुशास्त्रोक्तमार्गेण स्वानुभूत्या च चिद्घनम् ।
ब्रह्मैवाहमिति ज्ञात्वा वीतशोको भवेन्मुनिः ॥५२५॥

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥५२६॥

लक्ष्यालक्ष्यमतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना ।
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ॥५२७॥

चैत्यवर्जितचिन्मात्रमहं सर्वावभासकः ।
निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः॥५२८

इत्येवं चिन्तयन् भिक्षुः स्वरूपस्थितिमञ्जसा ।
निर्विकल्पस्वरूपज्ञो निर्विकल्पो बभूव ह ॥५२९॥

नानात्वमस्ति कलनासु न वस्तुतोऽन्त-
र्नानाविधासु सरसीव जलादिवान्यत् ।
इत्येकनिश्चयमयः पुरुषो विमुक्त-
इत्युच्यते समवलोकितसम्यगर्थः ॥५३०॥

तर्कतश्च प्रमाणाच्च चिदेकत्वव्यवस्थितेः ।
चिदेकत्वपरिज्ञाने न शोचति न मुह्यति ॥५३१॥

अधिष्ठानं समस्तस्य जगतः सत्यचिद्घनम् ।
अहमस्मीति निश्चित्य वीतशोको भवेन्मुनिः ५३२॥

चिदमलमजरं तदात्मतत्त्वं
तदवगतावुपशान्तिमेति चेतः ।
अवगतपरमैकतत्स्वरूपो
भवभयमुक्तपदोऽस्ति सम्यगेव ॥५३३॥

सम्यग्ज्ञानसमालोकः पुमान् ज्ञेयसमः स्वयम् ।
न बिभेति न चादत्ते वैवश्यं न च दीनताम् ॥५३४॥

ब्रह्म ज्ञात्वा परित्यागो वासनानां य उत्तमः ।
सत्तासामान्यरूपं यत्तत्कैवल्यपदं विदुः ॥५३५॥

एवं ब्रह्मविदो धीराः समा नीरागचेतसः ।
न नन्दन्ति न निन्दन्ति जीवितं मरणं तथा ॥५३६॥

संन्यस्तसर्वसङ्कल्पाः शान्तचित्ता मुनीश्वराः ।
ब्रह्मज्ञानप्रभावाद्धि मुच्यन्ते सर्वबन्धनैः ॥५३७॥

महाचिदेकरूपास्ति महासत्तेति योच्यते ।
निष्कलङ्का समा शुद्धा निरहङ्काररूपिणी ॥५३८॥

सकृद्धिभाता विमला नित्योदयवती समा ।
सा ब्रह्म परमात्मेति नामभिः परिगीयते ॥५३९॥

सैवाहमिति निश्चित्य गुरुशास्त्रप्रमाणतः ।
ब्रह्मानन्दे निमग्नः सन् विद्वान् कृतकृत्यो भवेत् ॥५४०॥

अलेपकोऽहमजरो नीरागः शान्तवासनः ।
निरंशोऽस्मि चिदाकाशमिति मत्वा न शोचति ॥५४१॥

तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा ।
ज्ञानसम्पत्तिसमये मुक्तोऽसौ विमलाशयः ॥५४२॥

अहं ममेति यो भावो देहाक्षादावनात्मनि ।
अध्यासोऽयं निरस्तव्यो विदुषा ब्रह्मनिष्ठया ॥५४३॥

यत्रैष जगदाभासो दर्पणान्तःपुरं यथा ।
तद्ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भवेदिह ॥५४४॥
शोधितयोर्ब्रह्मात्मनोरेकभावावगाहिनी ।
महावाक्यसमुत्पन्ना निर्विकल्पा दृढा च या ॥५४५॥
पुण्यपुञ्जविपाकाख्या वृत्तिः प्रज्ञेति कथ्यते ।
सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते ॥५४६॥
अहं ब्रह्मेति विज्ञानात् कल्पकोटिशतार्जितम् ।
सञ्चितं विलयं याति प्रबोधात्स्वप्नकर्मवत् ॥५४७॥
स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा ।
न श्लिष्यति यतिः किञ्चित्कदाचिद् भाविकर्मभिः ॥५४८॥
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ।
प्रारब्धे भोगतः क्षीणे तुरीयं पदमश्नुते ॥५४९॥
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ।
उपाधिनाशाद् ब्रह्मैव सन्ब्रह्माप्येति निर्द्वयम् ॥५५०॥
शैलूषो वेषसद्भावाभावयोश्च यथा पुमान् ।
तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः ॥५५१॥
घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥५५२॥
क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ।
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥५५३॥

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् ।
ब्रह्मभावं प्रपद्यैष विद्वान्नावर्तते पुनः ॥५५४॥

स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् ।
संसिद्धः ससुखं तिष्ठन्निर्विकल्पात्मनात्मनि ॥५५५॥

न सर्वोऽस्मीति सर्वोऽस्मि पूर्णानन्दचिदात्मकः ।
निश्चित्यैव पदे तिष्ठेद्यत्र ब्रह्मविदः स्थिताः ॥५५६॥

आत्मानन्दस्वभावो यस्त्रिपुटीद्वैतवर्जितः ।
तस्य विज्ञानतो धीरो न शोकं याति कर्हिचित् ॥५५७॥

निर्विकल्पचिदानन्द एक आत्मास्ति सर्वगः ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥५५८॥

बुद्ध्यादेः प्रत्यगात्मानं मायाशक्तेश्च साक्षिणम् ।
ज्ञात्वा ब्रह्माहमस्मीति ब्रह्मैव भवति स्वयम् ॥५५९॥

एवं यस्तु विजानाति सद्गुरोरुपदेशतः ।
स साध्वसाधुकर्मभ्यां सदा न तपति प्रभुः ॥५६०॥

प्रत्यक्चैतन्यरूपं यत् सर्वभावान्तरास्थितम् ।
तदेतदक्षरं सत्यं तद्विज्ञाय विमुच्यते ॥५६१॥

लोकत्रयेऽपि कर्तव्यं किञ्चिन्नास्त्यात्मवेदिनाम् ।
अद्वैतं परमानन्दं शिवं यान्ति तु केवलम् ॥५६२॥

स्वस्वरूपपरिज्ञानं यस्यास्ति ह्यधिकारिणः ।
कुत्राचिद् गमनं नास्ति तस्य पूर्णस्वरूपिणः ॥५६३॥

आकाशमेकं सम्पूर्णं कुत्रचिन्नैव गच्छति ।
तद्वत् स्वात्मपरिज्ञानी कुत्रचिन्नैव गच्छति ॥५६४॥
यो ह वै परमं ब्रह्म विजानाति मुनीश्वरः ।
ब्रह्मैव भवति स्वस्थः सच्चिदानन्दमात्रकः ॥५६५॥
विश्वेश्वरोऽहमजरो ब्रह्मज्योतिरहं शिवः ।
ब्रह्मैवं तु विदित्वा संसृतिपाशाद्विमुच्यते ॥५६६॥
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ।
समुद्रे लीयते तद्वज्जगन्मय्येव लीयते ॥
सोऽहं ब्रह्म न संसारी मत्तोऽन्यो नास्ति कश्चन ॥५६७॥
यस्यैवं परमात्मायं प्रत्यग्भूतः प्रकाशितः ।
स याति परमं ब्रह्म स्वयं साक्षात्परामृतम् ॥५६८॥
परं ब्रह्माहमस्मीति सच्चिदानन्दविग्रहम् ।
इत्येवं ब्रह्म जानाति यः स मुक्तो न संशयः ॥५६९॥
सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितम् ।
ब्रह्मरूपतया पश्यन्ब्रह्मैव भवति स्वयम् ॥५७०॥
भासमानमिदं सर्वं भानरूपं परं पदम् ।
पश्यन् वेदान्तमानेन सद्य एव विमुच्यते ॥५७१॥
सत्यज्ञानानन्दपूर्णलक्षणं तमसः परम् ।
ब्रह्मानन्दं सदा पश्यन् कथं बध्येत कर्मणा ॥५७२॥
ब्रह्मविज्ञानसम्पन्नः प्रतीतमखिलं जगत् ।

पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥५७३॥
अहं सत्यं परं ब्रह्म मत्तः किञ्चिन्न भिद्यते ।
एवं स्वात्मपरिज्ञानात् कर्मभिर्न स बध्यते ॥५७४॥

यः शरीरेन्द्रियादिभ्यो विभिन्नं सर्वसाक्षिणम् ।
परमार्थैकविज्ञानं सुखात्मानं स्वयम्प्रभम् ॥५७५॥

स्वस्वरूपतया नित्यं वेद स्वानुभवेन हि ।
स धीरः स तु विज्ञेयः परमात्मैव नापरः ॥५७६॥

यस्य प्रपञ्चानुभवः सदा न हि
स्वरूपबोधानुभवः सदा किल ॥
सदैव ब्रह्मात्मतया ह्यवस्थितो
न बद्धमुक्तव्यवहारभागसौ ॥५७७॥

मयि जीवत्त्वमीशत्त्वं कल्पितं वस्तुतो न हि ।
इति यस्तु विजानाति स मुक्तो नात्र संशयः ॥५७८॥

इदानीं त्वां रघुश्रेष्ठ प्रणमामि मुहुर्मुहुः ।
त्वद्रूपं ज्ञातुमिच्छामि तत्त्वतो राम मुक्तये ॥५७९॥

अनायासेन येनाहं मुच्येयं भवबन्धनात् ।
कृपया वद मे राम येन मुक्तो भवाम्यहम् ॥५८०॥

पृष्टो हनूमता ह्येवमुवाच रघुनन्दनः ।
मोक्षस्य कारणं ज्ञानं ब्रह्मात्मैकत्त्वगोचरम् ॥५८१॥

ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि ।

प्रारब्धक्षयपर्यन्तं जीवन्मुक्तो भविष्यसि ॥५८२॥

ततः कालवशादेव प्रारब्धे तु क्षयं गते ।
वैदेहीं मामकीं मुक्तिं यास्यसि नात्र संशयः ॥५८३॥

एवं हनूमता पृष्टो रामो राजीवलोचनः ।
ब्रह्मात्मैकत्वविज्ञानमुवाच मुक्तिसाधनम् ॥५८४॥

पुष्णाति यो धारयतीह विश्वं,
क्षराक्षरात्मानमपीश्वरोऽसौ ।
ज्ञात्वा तमात्मानमथोऽप्यनीशो
विमुच्यतेऽसौ निखिलैश्च पाशैः ॥५८५॥

ईशं तथात्मानमथापि मायां
यद्वा त्रयं भोक्तृमुखं ह्यशेषम् ।
यदाऽद्वयं ब्रह्म समीक्षतेऽथ
तिष्ठत्यनन्तात्मनि निर्विकल्पे ॥५८६॥

ज्ञात्वा हि देवं शिवमद्वितीयं
प्रत्यञ्चमात्मानमपास्तमोहम् ॥
पूर्णं ह्यथातोऽखिलपाशहानिः
क्लेशप्रहाण्या जननादिहानिः ॥५८७॥

विदार्य सीमानमिह प्रविष्टः
संसारदुःखोदधिमग्नचित्तः ॥
नेतीति वाक्यैः प्रतिषिध्य सर्वं

दृष्ट्वा स्वमात्मानमभूत्कृतार्थः ॥५८८॥
लोकान् समग्रान् स्ववशीकरोति
स्वशक्तिभिर्यः खलु नित्यमेकः ।
सृष्ट्यादिकर्मण्यपि वर्त्तमानो
ये तं विदुस्ते ह्यमृता भवन्ति ॥५८९॥
परात्परं व्यापिनमीश्वरं ये
गूढं च भूतेषु चराचरेषु ॥
विश्वस्य चैकं परिवेष्टितारं
जानन्ति तेऽप्याश्वमृता भवन्ति ॥५९०॥
अङ्गुष्ठमात्रं पुरुषं धिया गतं
सदा जनानां हृदये ह्यवस्थितम् ।
सर्वस्य चान्तः स्थितमात्मरूपतो-
ह्यजं विदुर्येऽपि भवन्ति तेऽमृताः ॥५९१॥
वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाच्च विशुद्धसत्वाः ।
आनन्दमात्मानमथो हृदिस्थं
विभ्राजमानं यतयो विशन्ति ॥५९२॥
एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम् ॥
समस्तचोद्धारमसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥५९३॥

समे शरीरे पुरुषो निमग्नो
दीनो ह्यथो शोचति मुह्यमानः ।
जुष्टं ततोऽन्यं परिपश्यन्नीशं
स्वमेव तत्त्वं स हि वीतशोकः ॥५९४॥
सर्वांश्च योनीर्नियमयत्यथैकः
समेति च व्येति च यत्र सर्वम् ॥
ज्ञात्वा हि देवं वरदं तमीड्य-
मीशं परां शान्तिमुपैति प्राज्ञः ॥५९५॥
सूक्ष्मातिसूक्ष्मं खलु सर्वसाक्षिण·
मनेकरूपं ह्यखिलस्य कारणम् ।
व्याप्तारमेकं शिवमद्वितीयकं
ज्ञात्वाथ प्राप्नोति च शान्तिमुत्तमाम् ॥५९६॥
स एव गोप्ता भुवनस्य च स्थितौ
विश्वाधिपो गूढतया ह्यवस्थितः ।
युक्ताश्च यस्मिन्नृषयोऽथ निर्जराः
ज्ञात्वा भवेत्तं खलु पाशमोचनम् ॥५९७॥
वेदप्रमाणं खलु वेदगुह्यं
परं विजानाति च यं स्वयम्भूः ॥
देवा मनुष्या ऋषयो विदुस्तं
ते तन्मयाश्चाप्यमृता बभूवुः ॥५९८॥

निराश्रयो यः प्रणयेन गृह्यते
विध्वंसको यश्च समूलसंसृतेः ।
पुरातनो यः पुरुषः सदाशिवः
जानन्ति तं यान्ति न ते पुनर्भवम् ॥५९९॥
तमीश्वराणां परमं महेश्वरं
तं देवतानां परमं हि दैवतम् ॥
पतिं पतीनां परमं परात्परं
विज्ञाय देवं वयमर्थपारगाः ॥६००॥
यदा ह्ययं पश्यति स्वप्रकाशं
कर्तारमीशं पुरुषञ्च योनिम् ॥
विद्वाँस्तदा धूतवृषेतरः सन्
साम्यं परं याति निरञ्जनोऽसौ ॥६०१॥
प्रत्यञ्चमात्मानमुपाधिवर्जितं
विज्ञाय चैकात्मतया हि चिद्घनम् ।
पूर्णं तदा ब्रह्मतयाऽवशिष्यते
यस्मात्पृथक्त्वं त्वगमद्ध्युपाधितः ॥६०२॥
यो ब्रह्मविद्यामनुतिष्ठति ज्ञः
समूलघातं त्वपहन्ति पापम् ॥
ततो ह्यनन्ते च सुखे प्रतिष्ठां
स्वयम्प्रकाशे महतीह गच्छेत् ॥६०३॥

अणुत्वाद्यध्यासास्पदमपि च तेन व्यवहृतं
स्वतोऽतीतं तस्मात् स्वमथ निखिलानां तनुभृताम्
स्थितं बुद्धौ यस्मादुपरतमतिः स्वच्छकरणो
महत्त्वं स्वं पश्यन् शुच उपहतिं नो स लभते ॥६०४

यदेन्द्रियाणीह बहिर्मुखानि
स्वभावतश्चाप्यमृतत्वकामः ।
गृह्णाति पश्यत्यथ चात्मतत्त्वं
तदा कृतार्थो भवतीह धीरः ॥६०५॥

परात्मदृष्ट्या समुपास्य तारकं
यः सत्यलोकं प्रति याति कोविदः ॥
समीक्ष्य तत्रैव पराजरामृतं
स निर्भयं शान्तमुपैति पूरुषम् ॥६०६॥

सिन्धौ गताश्च सरितः सलिलात्मभावं
गच्छन्त्युपाधिकृतनाम विहाय रूपम् ॥
एवं विवर्जितविशेषवपुष्यनन्ते
विद्याविलापितकलो ह्यकलो विमृत्युः ॥६०७॥

यस्मिन्कलाः स्थितिपदं परितो ह्यवाप्ताः
आत्मन्यराः खलु यथा रथचक्रनाभौ ॥
तं वेदनीयममलं पुरुषञ्च विद्या-
न्मृत्युर्व्यथां स हि न गच्छति दीर्घदर्शी ॥६०८॥

अव्याकृतादि चिदचिच्च समस्तवस्तु
ह्यात्मातिरिक्तमिह पश्यति नो परिव्राट् ॥
तस्मिंश्च वस्तुनि तु पश्यति चात्मतत्त्वं
ग्लानिं करोति न ततस्त्वनुवाद एषः ॥६०९॥

शब्दादिहीनं तत एव चाव्ययं
नित्यं तथानादिमनन्तविग्रहम् ॥
कूटस्थनित्यं महतो विलक्षणं
विज्ञप्तिमात्रन्त्ववगम्य मुच्यते ॥६१०॥

यदर्था यत्प्रयुक्ता च श्रोत्रादेर्व्याप्रतिरियम् ।
तं स्वयम्ब्रह्म विज्ञाय ह्युज्झित्वा तेष्वथात्मताम् ॥६११॥

सर्वैषणाविनिर्मुक्तास्त्यक्त्वा देहमिमं बुधाः ।
भवन्त्यमृत्युधर्माणः क्षिप्रमेव न संशयः ॥६१२॥

महाभागां विद्यां सदभयचिदानन्दविषयां
यथोक्तां यो धीमानपहतमलो वेद सततम् ॥
विधूयासौ पापं त्रिविधमथ तापं सुखतना-
वपारे सन्तिष्ठत्यमलवपुषि ब्रह्मणि परे ॥६१३॥

यमिन्द्रियार्थसम्बन्धा न विकुर्वन्ति पूरुषम् ।
समदुःखसुखं ज्ञानात् सोऽमृतत्वाय कल्पते ॥६१४॥

सर्वविकारशून्यं स्वमात्मानं सच्चिदद्वयम् ।
यो जानाति स आत्मज्ञः कृतकृत्यो भवेत्किल ॥६१५॥

प्रत्यक्षाद्यविषयोऽयमात्मा वेदेन बोध्यते ।
तज्ज्ञानाच्छोकहेतोश्च ह्यभावान्नैव शोचति ॥६१६॥

निर्झरेषु फलं यावत्स्नानपानादिकं भवेत् ।
सम्मिलितेषु तत्तावद् भवत्येव यथा तथा ॥६१७॥

काम्यकर्मफलं यावद्ब्रह्मलोकसुखावधि ।
तावज्ज्ञानाद्भवत्येवाभिन्नं ब्रह्मसुखाद्यतः ॥६१८॥

निष्कामकर्मणा शुद्धधियो ब्रह्मात्मबुद्धयः ।
जन्मरूपेण बन्धेन निर्मुक्ता यान्ति तत्पदम् ॥६१९॥

स्थितिर्विज्ञानरूपैषा ब्रह्मात्मैकत्वगोचरा ।
समधिगम्य चैनां हि न विमुह्यति कश्चन ॥६२०॥

अन्त्यायुष्यपि स्थित्वाऽस्यां ब्रह्मनिर्वाणमृच्छति ।
यावज्जीवं स्थितिं प्राप्य तद्गच्छतीति किं पुनः ॥६२१॥

आत्मज्ञानैकनिष्ठस्तु विहाय वनितादिषु ।
रतिमात्मनि तां कुर्यादात्मना तृप्तिमेव च ॥६२२॥

मनोज्ञाऽन्नादिना नैव तथा सन्तुष्ट आत्मनि ।
न हिरण्यादिलाभेन कृतकृत्यः स एव हि ॥६२३॥

जडचैतन्ययोस्तत्त्वं विकारिनिर्विकारयोः ।
यो जानाति स कर्तृत्वाभिमानेन न बध्यते ॥६२४॥

ब्रह्मण्यारोपितं मूढैर्जन्म कर्म च लौकिकम् ।
मायया यो विजानाति अजोऽपीत्यादिवाक्यतः ॥६२५॥

आत्मनस्तत्त्वज्ञानात् स त्यक्त्वा देहमिमं पुनः ।
न प्राप्नोति जनिं किन्तु वासुदेवं प्रपद्यते ॥६२६॥

कर्तृत्वादिविहीनं तद्ब्रह्मात्मत्वेन वेद यः ।
सोऽप्यकर्त्राऽऽत्मज्ञानेन मुच्यते नात्र संशयः ॥६२७॥

अनेककारकैः साध्यं कर्म यज्ञादिरूपकम् ।
तस्मिन्स कारके ब्रह्मज्ञानाद् गच्छेत्तदद्वयम् ॥६२८॥

यावद्धि वैदिकं किञ्चिच्छ्रेयसः साधनं मतम् ।
कृतं तन्नात्मना किन्तु मनोवाक्कायकर्मजम् ॥६२९॥

निर्व्यापारो ह्युदासीनस्त्वात्मा सङ्गविवर्जितः ।
विमोक्ष्यते सम्यग्ज्ञानादस्मात् संसारबन्धनात् ॥६३०॥

साक्षात्कारो दृढो यस्य हर्षोद्वेगौ च तस्य नो ।
भिन्नप्रियाप्रियाभावाज्जीवन्मुक्ततया स्थितः ॥६३१॥

आत्मन्येव सुखं यस्य न बाह्यविषयैरिति ।
क्रीड़ा तथात्मनि यस्य न स्त्र्यादिविषयेष्विति ॥६३२॥

ज्ञानं तथात्मनि यस्य न श्रोत्रादिजमित्यपि ।
समाहितात्मनिष्ठो यो ब्रह्मरूपस्तदृच्छति ॥६३३॥

जितेन्द्रिया हिंसाशून्याः शुद्धान्तःकरणाश्च ये ।
निवृत्तसंशयाः सम्यग्ज्ञानान्मुक्तिं प्रयान्ति ते ॥६३४॥

निर्विशेषं परात्मानं शब्दशक्तेरगोचरम् ।
रूपादिरहितं नित्यं सर्वव्यापिनमेव च ॥६३५॥

कूटस्थं स्पन्दहीनञ्च मनोवृत्तेरगोचरम् ।
शमदमादिसम्पन्ना रागद्वेषादिवर्जिताः ॥६३६॥
विरक्ताः सर्वभूतेभ्योऽभयदातार एव च ।
असन्दिग्धाविपर्यस्तसाक्षात्कारेण यान्ति तम् ॥६३७॥
सन्त्यक्तकामक्रोधानां यतशीलाजितहृदाम् ।
जीवतां च मृतानाञ्च मोक्षः साक्षात्कृतात्मनाम् ॥६३८॥
यज्ञानां तपसाञ्चैव भोक्तारं देवरूपतः ।
कर्तृरूपेण वा विश्वसृजादीनां नियामकम् ॥६३९॥
विना प्रत्युपकारं हि सर्वप्राण्युपकारम् ।
साक्षात्कृत्य परात्मानं मुक्तिमाप्नोत्यसंशयम् ॥६४०॥
निखिलदुःखहेतोश्च सद्यः संसारबन्धनात् ।
ब्रह्मानुभवपर्यन्तं ज्ञानं प्राप्य विमुच्यते ॥६४१॥
कार्यकारणनिर्मुक्तं भावाभावविलक्षणम् ।
निर्विशेषं विभुं ज्ञात्वा संसारान्मुच्यते ध्रुवम् ॥६४२॥
शुद्धं परात्मानमभिन्नरूपं
मायाविलासात्मकदृश्यहीनम् ।
साक्षाद्विजानाति स सर्वथैव
प्रवर्त्तमानोऽपि विमुच्यते हि ॥६४३॥
कूटस्थं परमात्मानमविनाशिनमद्वयम् ।
प्रपश्यन्नात्मरक्षातस्ततो याति परां गतिम् ॥६४४॥

आत्मनो जायमानत्त्वात्सर्वमात्मेति पश्यति ।
न ततोऽन्यत्ततो ज्ञानाद्ब्रह्म सम्पद्यते ध्रुवम् ॥६४५॥

स्वमात्मानमकर्तारं सर्वदृश्यप्रकाशकम् ।
साक्षात्करोति विद्वान् स परं ब्रह्माधिगच्छति ॥६४६॥

निर्दर्पास्त्वविवेकहीनमनसः पुत्रादिसङ्गोज्झिताः
आत्मज्ञानपरायणा विषयभोगाशाविहीनाश्च ये ॥
द्वन्द्वैर्दुःखसुखप्रदैरविरतं मुक्ता विशेषेण ये
वेदान्तैरवधारितात्मनि रता गच्छन्ति विष्णोः पदम्॥६४७॥

देहजीवनमात्रेऽपि ममकारेण वर्जितः ।
शान्तो ज्ञानैकनिष्ठश्च ब्रह्मभावाय कल्पते ॥६४८॥

शुद्धचेताः पुमानेव शास्त्राचार्योपदेशतः ।
साक्षात्कृत्य परात्मानं परं श्रेयो ह्यवाप्नुयात् ॥६४९॥

हृदये संस्थितो देवश्चिन्मात्रमिति विश्रुतः ।
सत्यानन्दस्वरूपश्च तस्मिन् ज्ञाते विमुच्यते ॥६५०॥

उषित्वा यावदारब्धं जीवन्मुक्ता विपश्चितः ।
प्रारब्धान्तेऽपरिच्छिन्नं यान्ति केवलतासुखम् ॥६५१॥

प्राप्ताज्ञानदशामेतां पशुम्लेच्छादयोऽपि ये ।
सदेहा वाप्यदेहा वा ते मुक्ता नात्र संशयः ॥६५२॥

भृशं जिज्ञासयात्मायं साक्षात्कृत्य स्वकं वपुः ।
संसारान्मोक्षमाप्नोति बन्धनादिव वारणः ॥६५३॥

शुद्धचिन्मात्ररूपोऽहं नैव देहादिरूपकः ।
शुद्धात्मसंविदं प्राप्य कैवल्यं समवाप्नुयात् ॥६५४॥

तत्त्वबोधपरिपाको विषयासक्तित्यागतः ।
संसारपदवी तस्मान्मूलोच्छेदेन नश्यति ॥६५५॥

अहं सर्वमिदं विश्वं परमात्माहमच्युतः ।
नान्यदस्तीति या संवित् परमा सा ह्यहंकृतिः ॥६५६॥

सर्वस्माद् व्यतिरिक्तोऽहं सूक्ष्मात्सूक्ष्मतरोऽस्म्यहम् ।
इति या संविदेषाऽसौ द्वितीयाऽहंकृतिः शुभा ॥६५७॥

द्वावप्येतावहङ्कारौ श्रेष्ठौ दर्शनद्वारतः ।
मोक्षायैव न बन्धाय जीवन्मुक्तस्य सन्मतेः ॥६५८॥

नानन्तोऽहं वराकोऽहमिति दुर्निश्चयोदितः ।
पाणिपादादिमात्रोऽयमहमित्येष निश्चयः ॥६५९॥

अहङ्कारस्तृतीयोऽसौ न श्रेष्ठो बन्धहेतुतः ।
अन्यथाग्रहद्वारेण वर्जनीयो हि सर्वथा ॥६६०॥

परिस्फुरति निःसारः संसारोऽयमसन्मयः ।
अनन्तोऽस्मीश्वरोऽस्मीति निश्चयेन विलीयते ॥६६१॥

संसारसंज्ञकं वृक्षं छित्त्वा ज्ञानासिना किल ।
मुक्तो विहरति प्राज्ञः स्तम्भाद्धि वारणो यथा ॥६६२॥

तत्त्वज्ञतामुपेत्याथ मूलोच्छेदबलादिह ।
जगज्जालमपास्यैव मोक्षमाप्नोति शाश्वतम् ॥६६३॥

तस्मिन् किल पदे राम ज्ञस्तिष्ठति महोत्तमे ।
यस्मिन् स्थितो न संसारसुखेषु विनिमज्जति ॥६६४॥

सर्वदुःखविनिर्मुक्तमानन्दात्मानमद्वयम् ।
सत्त्वप्रधानया बुद्ध्या निश्चित्य मुक्तिमाप्नुयात् ॥६६५॥

आत्मैवेदं जगदिति जाते राघव निश्चये ।
नीरागः समवाप्नोति निर्दुःखमुत्तमं पदम् ॥६६६॥

एवं सत्यात्मबोधेन स्वात्मैवेदमिति स्थितिम् ।
जीवन्मुक्ता महात्मानः सम्प्राप्ता जनकादयः ॥६६७॥

अजरामरमात्मानं बुद्ध्वा बुद्धिमतां वरः ।
जरामरणशङ्कापि न तस्य हृदि जायते ॥६६८॥

आत्मतत्त्वैक आनन्द इति ज्ञानाद् भयानकैः ।
न ते रामास्ति सम्बन्धः किं बिभेषि जगद्भ्रमात् ॥६६९॥

सम्यग्निश्चयमादाय प्रत्यग्ब्रह्मैकगोचरम् ।
स्वयमेवात्मनात्मानमनन्तं पदमाप्स्यसि ॥६७०॥

परमानन्दरूपेण स्वयं स्फुरति चिन्मयम् ।
तज्ज्ञात्वा जन्मनः पारं परमाप्नोत्यसंशयम् ॥६७१॥

आत्मज्ञानमवाप्याथ वीतशोको भयापहः ।
जीवन्मुक्तदशां प्राप्तो ब्रह्मविश्रान्तिमेति हि ॥६७२॥

अमलं बोधमात्रं हि निर्वाणं सर्वसाक्षिणम् ।
परमानन्दमात्मानं परिज्ञायामृतो भवेत् ॥६७३॥

आत्मतत्त्वैकनिष्ठस्य हर्षामर्षवशं मनः ।
यस्य न यात्यसक्तोऽसौ जीवन्मुक्तः स कथ्यते ॥६७४॥

वीतशोकभयायासो गतसंसारसम्भ्रमः ।
तुर्यावस्थामुपारूढो ज्ञानवान्न पुनः पतेत् ॥६७५॥

यथाभूतात्मतत्त्वैकपरिज्ञानेन राघव ।
प्राप्नोत्यात्मनि निर्वाणं चिदानन्दैकविग्रहे ॥६७६॥

विज्ञाय स्वात्मनात्मानं मानमेयामयोज्झितम् ।
जीवन्मुक्ताश्चरन्तीह यावत्प्रारब्धसंक्षयम् ॥६७७॥

आत्मैव सकलं विश्वं तस्मादन्यन्न किञ्चन ।
एवं ज्ञात्वाथ संसारमतिक्रामति धीरधीः ॥६७८॥

सर्वात्मकं सर्वगतं सर्वेशं सर्वनायकम् ।
सर्वाकारं निराकारं स्वमात्मानं प्रपश्यति ॥६७९॥

सर्वाशानां परित्यागात् सर्वोपाधिविवर्जितः ।
जीवन्मुक्तिपदं प्राप्तस्तीर्णसंसारसागरः ॥६८०॥

नास्त्येव स्वात्मनो भिन्नमिति निश्चयवान् दृढम् ।
सर्वभावेषु निर्मुक्तकलनो मुक्तिमेति हि ॥६८१॥

अद्वैतदर्शनाद्राम द्वैतं विनश्यति ध्रुवम् ।
ज्ञानादस्तमितद्वित्वं भवात्मैव त्वमात्मना ॥६८२॥

असन्दिग्धापरोक्षेण विज्ञाते परमात्मनि ।
संविन्मात्रस्वभावोऽथ मिथ्याबन्धो विनश्यति ॥६८३॥

ज्ञानेन सकलामाशां विनिकृत्य समूलतः ।
परां निर्वृतिमाप्नोति सर्वदुःखविवर्जिताम् ॥६८४॥
इन्द्रियोत्थविकारैश्च स्थूलाद्युपाधिभिस्तथा ।
विहीनः प्रियसङ्गाद्यै रागादिदोषवर्जितः ॥६८५॥
ज्ञातब्रह्मात्मभावो यः प्राप्नोति परमं पदम् ।
अनन्तममृतं सत्यं कामनाशोकवर्जितः ॥६८६॥
ज्ञातं येन परं ब्रह्म सच्चिदानन्दमद्वयम् ।
स तद्विष्णुपदं याति यतो नावर्तते पुनः ॥६८७॥

संवेद्यवर्जितमनुत्तममाद्यमेकं
संवित्पदं विकलनं कलयन्महात्मा ।
हार्देऽवतिष्ठति बहिर्मुखतां विहाय
कुर्वन्नकर्तृपदमेत्य प्रतिष्ठति ज्ञः ॥६८८॥

ज्ञानवानुदितानन्दो न क्वचित्परिमज्जति ।
जीवन्मुक्तो गतासङ्गः प्राप्नोति केवलात्मताम् ॥६८९॥
साक्षात्कारेण तत्त्वस्य सर्वानर्थस्य नाशतः ।
अद्वितीयपरानन्दस्वरूपे प्रतितिष्ठति ॥६९०॥
अध्यारोपापवादाभ्यां तत्त्वं विदितवाँस्तु यः ।
सर्वथा मुक्त एवासौ भवति विगतज्वरः ॥६९१॥
एतमात्मानमालोक्य जराशोकभयापहम् ।
सम्भृष्टबीजवज्जन्तुर्जन्मने नाऽवकल्पते ॥६९२॥

निवृत्तत्रिपुटीद्वैतं सर्वविकल्पवर्जितम् ।
पश्यन्ब्रह्मात्मरूपं तज्जीवन्मुक्तपदे स्थितः ॥६९३॥

देहात्पृथक्कृतं जीवं ब्रह्माभिन्नं प्रपश्यति ।
तस्मिन्हि जन्मदुःखादि न किञ्चित्स्पृशति किल ॥६९४॥

समूला वासना बन्धस्तत्क्षयो मोक्ष उच्यते ।
अधिकारिशरीरे हि वेदान्तवाक्यतः किल ॥६९५॥

उत्पन्नतत्वज्ञानस्य समूलवासनाक्षयात् ।
परमात्मपदप्राप्तिः सद्योमुक्तिर्भवेदिह ॥६९६॥

यत्रेदं कल्पितं विश्वं व्याप्तं येनाखिलश्च तत् ।
किञ्चिन्नैव यतो भिन्नं तं ज्ञात्वा मुच्यते बुधः ॥६९७॥

विपश्चित् स्वसमं सर्वं बुद्ध्वानन्दात्मनि किल ।
निर्विशेषचिदाकाशे जीवन्मुक्ततया स्थितः ॥६९८॥

ज्ञातब्रह्मात्मभावो यः परानन्दघनात्मकः ।
अभ्युपेतः परात्मानं जीवन्मुक्तोऽवतिष्ठते ॥६९९॥

साक्षात्कृत्य परानन्दं परिपूर्णात्मरूपतः ।
संशान्तसर्वसन्देहः पूर्णबोधात्मना स्थितः ॥७००॥

आनन्दैकघनं ब्रह्म जीवजगद्विवर्जितम् ।
बुद्ध्वैवमात्मनस्तत्त्वं निर्वाणं ब्रह्म प्राप्नुयात् ॥७०१॥

अखण्डात्मावबोधेन विलाप्य सकलं जगत् ।
प्रमाणावेद्यचिन्मात्रब्रह्मात्मनाऽवतिष्ठते ॥७०२॥

शुद्धबोधैकरूपस्य तत्त्वस्य ज्ञानतः किल ।
अन्तश्च शीतलो भूत्वा सुखरूपोऽवतिष्ठते ॥७०३॥

ब्रह्मात्मैक्यविदो यान्ति यत्सुखं पारमार्थिकम् ।
आमुष्मिकमपि सुखं तत्र खलु तृणाल्लघु ॥७०४॥

शुद्धान्तःकरणे पुंसि सर्वं ब्रह्मेति बोधतः ।
संसारोपशमो मोक्षो ह्यनन्तश्चाभिव्यज्यते ॥७०५॥

ब्रह्मात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ।
आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छति ॥७०६॥

शिष्यायाऽऽध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ।
उपदिशेद्यया चासौ भयञ्चातितरिष्यति ॥७०७॥

ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णयेत्तस्मै हृदयग्रन्थिभेदनम् ॥७०८॥

उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ।
कूटस्थमिममात्मानं वेद प्राप्नोति सोऽभयम् ॥७०९॥

सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
तेषां साक्षिणमात्मानं यो वेद न स बध्यते ॥७१०॥

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग् हेतुर्व्यापकोऽसङ्ग्यनावृतः ॥७११॥

एतैर्विजानन्नात्मानं विद्वान् द्वादशलक्षणैः ।
अहं ममेति देहादौ त्यक्त्वा बन्धाद्विमुच्यते ॥७१२॥

श्रद्धान्वितस्तत्त्वमसीति वाक्यतो
गुरोः प्रसादादपि शुद्धमानसः ।
विज्ञाय चैकात्म्यमथात्मजीवयोः
सुखी भवेन्मेरुरिवाप्रकम्पनः ॥७१३॥

उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं सुखम् ।
तापत्रयोपशान्तिश्च ज्ञानामृतेन गच्छति ॥७१४॥

अनेकजन्मसाहस्रां संसारपदवीं व्रजन् ।
मोहश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः ॥७१५॥

प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारपान्थस्य याति मोहश्रमः शमम् ॥७१६॥

मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान् ।
अनन्यातिशयाबाधं परं निर्वाणमृच्छति ॥७१७॥

निर्विकल्पो निराख्यातो निष्कलङ्को निरञ्जनः ।
आनन्दो निष्कलोऽनन्तो निर्विशेषसदद्वयः ॥७१८॥

शुद्धो नारायणो देव एक एवाच्युतो विभुः ।
एवं यो वेद तत्त्वेन विष्णुरेव भवेद्धि सः ॥७१९॥

शुद्धचेताः पुमानेव शुद्धं नारायणं हरिम् ।
स्वात्मत्वेन विजानाति विष्ण्वाख्यं येन तत्पदम् ॥७२०॥

अहं हरिः सर्वमिदं स एव
नान्यत्ततः कारणकार्यजातम् ।

ईदृङ् मनो यस्य न तस्य भूयो
भवोद्भवाः द्वन्द्वगदा भवन्ति ॥७२१॥

श्रुत्वाऽचलं ध्रुवं नित्यं सदैकरूपमव्ययम् ।
प्रयत्नतो विजानीयाद् वासुदेवं यतो विशेत् ॥७२२॥

एवमुक्त्वा ययौ विद्वान्निदाघं स ऋभुर्गुरुः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥७२३॥

सर्वभूतान्यभेदेन ददृशे परमात्मना ।
तथात्मानं ततो मुक्तिमवाप परमां द्विजः ॥७२४॥

शुद्धसत्त्वः परमात्मनिष्ठां प्राप्नोत्यसंशयम् ।
सदानन्दरसं यस्याः प्रसादात्समवाप्नुयात् ॥७२५॥

सर्वसाक्षिणमात्मानं परमानन्दमद्वयम् ।
परिज्ञाय नरो बन्धान्मुक्तः कैवल्यमश्नुते ॥७२६॥

स्वमात्मानं विद्यात्स्वयममलमानन्दवपुषं
प्रसादाद् बुद्धेर्वै यमितमनसामुं निखिलगम् ।
स्थितिं लब्ध्वा स्वस्मिन्स्वमहिमनिरस्ताखिलद्वये
अपारं संसारं तरति कृतकृत्यश्च भवति ॥७२७॥

विज्ञातव्यमतः सम्यग् ब्रह्माभिन्नत्वमात्मनः ।
येनाद्वितीयमानन्दं ब्रह्म सम्पद्यते बुधः ॥७२८॥

त्यक्त्वाऽनात्मन्यभिमानं स्वात्मानं सर्वसाक्षिणम् ।
अखण्डं सच्चिदानन्दं ज्ञात्वा शान्तिमवाप्नुयात् ॥७२९॥

ब्रह्मानन्दनिधिर्गुप्तो ह्यहङ्कारमहाहिना ।
मस्तकैस्त्रिगुणमयैर्विद्वान् भोक्तुं क्षमो भवेत् ॥७३०॥

विच्छिद्य विज्ञानमहासिनेमं
भुङ्क्ष्वाऽऽत्मसाम्राज्यसुखं यथेष्टम् ।
तूष्णीं समास्स्वाऽऽत्मसुखानुभूत्या
पूर्णात्मना ब्रह्मणि निर्विकल्पे ॥७३१॥

मनसः सम्प्रसादेन परात्मदर्शनं भवेत् ।
तस्माद्बन्धस्य नाशश्च ह्यानन्दस्याप्तिरेव च ॥७३२॥

सर्वाधिष्ठानमात्मानं विनिश्चित्यापरोक्षतः ।
सर्वोपाधिविनिर्मुक्तो ब्रह्मात्मनाऽवतिष्ठते ॥७३३॥

नित्याद्वयाखण्डचिदेकरूपः
प्रत्यक् सदानन्दघनः परात्मा ।
ज्ञात्वैवमात्मानमखण्डबोधं
बन्धाद्विमुक्तः समुपैति शान्तिम् ॥७३४॥

निर्विशेषं परं तत्त्वं साक्षात्कुर्वन्निहैव हि ।
समनुभूय निर्वाणसुखमाप्नोत्यनन्तरम् ॥७३५॥

विशुद्धसत्त्वतो ज्ञानं ब्रह्मात्मनिश्चयात्मकम् ।
प्रजायते सदानन्दरसं तेन समृच्छति ॥७३६॥

सर्वप्रकाशकं नित्यं स्वरूपं परमात्मनः ।
तद्विज्ञाय नरो बन्धान्मुक्तः कैवल्यमश्नुते ॥७३७॥

बुद्धेः प्रसादतो वेत्ति साक्षादात्मानमद्वयम् ।
संसाराब्धिं ततस्तीर्त्वा कृतार्थो ब्रह्मरूपतः ॥७३८॥

त्यक्त्वा देहात्मबुद्धिं यो ब्रह्मणि निर्विकल्पके ।
सर्वात्मनि करोतीति प्राप्नोति शान्तिमुत्तमाम् ॥७३९॥

ब्रह्माभिन्नत्वविज्ञानं बन्धनान्मुक्तिकारणम् ।
येनाद्वितीयमानन्दं ब्रह्म सम्पद्यते बुधः ॥७४०॥

ब्रह्मभूतस्तु संसृत्यै विद्वान्नावर्तते पुनः ।
विज्ञातव्यमतः सम्यग् ब्रह्माभिन्नत्वमात्मनः ॥७४१॥

निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भवत्यपि ॥७४२॥

अखण्डबोधमात्मानं सर्वथा बाधवर्जितम् ।
ब्रह्माभिन्नतया ज्ञात्वा शान्तिमाप्नोति शाश्वतीम् ॥७४३॥

अपारसंसारसमुद्रपाती
लब्ध्वा परां बुद्धिमुदारसत्वः ।
न शोकमायाति न दैन्यमेति
गतज्वरस्तिष्ठति नित्यतृप्तः ॥७४४॥

स्वरूपमात्मनो ज्ञात्वा गुरुशास्त्रप्रमाणतः ।
जीवन्मुक्ताश्चरन्तीह यथैव हि शुकादयः ॥७४५॥

आलोकयति चेद्ब्रह्म तदाऽसत्यमयीं मनः ।
शरीरभावनां त्यक्त्वा परामायाति निर्वृतिम् ॥७४६॥

स्वेच्छयात्मात्मनो ब्रह्म ह्यनुभूय स्वकं वपुः ।
संसारान्मुक्तिमाप्नोति परां नास्त्यत्र संशयः ॥७४७॥
जीवो ब्रह्मामलं शुद्धं सर्वरूपमनामयम् ।
सर्वसाक्षिणमात्मानं विज्ञायामृतमश्नुते ॥७४८॥
सर्वमेव चिदाकाशं ब्रह्मेति दृढनिश्चये ।
स्थितिं याते शमं याति जीवो निःस्नेहदीपवत् ॥७४९॥
अहमात्मा सदानन्दः शुद्धो बुद्धोऽजरोऽमरः ।
शान्त :समासमाभास इति मत्वा न शोचति ॥७५०॥
यदैवैवं चितो रूपं बुद्धं पूर्णमखण्डितम् ।
तीर्त्वा तदैव संसारात् परमेश्वरतां गतः ॥७५१॥
ज्ञानसम्प्राप्तिसमये मुक्तोऽसौ विमलाशयः ।
अहंभ्रान्तिर्हि बन्धाय मुक्तिर्ज्ञानेन तत्क्षयः ॥७५२॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यदा पश्यत्यभेदेन तदा जीवो विमुच्यते ॥७५३॥
एवं साश्चिन्तयन् विष्णुमभेदेनात्मनो द्विजः ।
तन्मयत्वमवापाग्र्यं मेने चात्मानमच्युतम् ॥७५४॥

सत्यं तथा ज्ञानमनन्तमद्वयं
पूर्णं परिच्छेदविहीनमच्युतम् ।
नित्यं तथानन्दघनं निरञ्जनं
विज्ञाय शान्तिं समुपैति शाश्वतीम् ॥७५५॥

ब्रह्मैवाहमिति ज्ञात्वा चिदानन्दात्मना बुधाः ।
ब्रह्मीभूय वसन्त्येते संत्यक्तबाह्यदृष्टयः ॥७५६॥
स्थूलसूक्ष्मशरीरेऽस्मिन् संत्यक्त्वाहंधियं सदा ।
सुखात्मानं विनिश्चित्य तिष्ठन्ति ब्रह्मरूपतः ॥७५७॥
अखण्डानन्दमात्मानं विज्ञाय स्वस्वरूपतः ।
सर्वकामप्रहाणाद्धि मुच्यते नात्र संशयः ॥७५८॥
विज्ञात आत्मनो यस्य ब्रह्मभावः श्रुतेर्बलात् ।
भवबन्धविमुक्तोऽसौ जीवन्मुक्तो न संशयः ॥७५९॥
अप्रतिबद्धवेदान्तवाक्यादात्मैक्यगोचरा ।
साक्षात्कारात्मिका बुद्धिर्मुक्तिफला प्रजायते ॥७६०॥
ब्रह्मात्मैकत्वविज्ञाने निरस्तातिशयं सुखम् ।
स्वाराज्यं विदुषः सिद्धं भवतीति श्रुतिर्जगौ ॥७६१॥
विष्णोः परे पदे ज्ञाते परिपूर्णेऽखिलोत्तमे ।
सम्प्राप्तसर्वकामस्य मुक्तिः करफलायते ॥७६२॥

वेदान्तवाक्यैरवगम्यमाने
प्रत्यक् सुखाद्वैतपरात्मतत्त्वे ।
संसारदुःखस्य निवृत्तिमाशु
स्वाराज्यसौख्यास्थितिमाप्नुवन्ति ॥७६३॥

अनेन विदुषा प्राप्यः साक्षात्कारेण यः सदा ।
पुण्यपापैर्विनिर्मुक्तो ह्यविद्यागन्धवर्जितः ॥७६४॥

असंशयस्ततः प्रोक्तः परमानन्दविग्रहः ।
नित्यविज्ञप्तिरूपश्च ब्रह्मविद्ब्रह्म निर्भयम् ॥७६५॥

एतस्मिन् हृदयाकाशे चिदानन्दात्मरूपिणि ।
अद्वितीये निराकारे नित्यमुक्तस्वभावके ॥७६६॥

स्वयं ज्योतिषि मायातः सकार्याया विभिन्नताम् ।
ज्ञात्वा वेदविदो विप्रा ब्रह्मात्मत्वेन तत्पराः ॥७६७॥

विक्षेपावरणाद्योनेर्विनिर्मुक्ताः सुनिर्वृताः ।
अस्मिन्नेव च तादात्म्याल्लीना जननवर्जिताः ॥७६८॥

तदिदं य एवमार्यो
वेद ब्रह्माहमस्मीति ।
स इदं सर्वं तस्य हि
देवा नैवेशतेऽभूत्यै ॥७६९॥

मानुषमत्तङ्गमहिष-
श्वसूकरादिष्वनुस्यूतम् ।
यः पश्यति जगदीशं
भुङ्क्तेऽसावद्वयानन्दम् ॥७७०॥

परे ब्रह्मणि निष्ठस्य परिव्राजो विरागिणः ।
अमृतत्वं श्रुतिः प्राह पुण्यफलविलक्षणम् ॥७७१॥

सम्यग्ज्ञानध्वस्तसर्वप्रपञ्चः
स्वीये रूपे निर्गुणे निर्विशेषे ।

पूर्णैश्वर्ये स्वप्रकाशस्वभावे
स्वाराज्येऽस्मिन् स स्वराडेव तिष्ठेत् ॥७७२॥

तस्माज्जीवन्मुक्तरूपेण विद्वान्
आरब्धानां कर्मणां भोगसिद्ध्यै ।
स्थित्वा भोगं ध्वान्तगन्धप्रसूतं
भुक्त्वात्यन्तं याति कैवल्यमन्ते ॥७७३॥

ज्ञानैकरूपं तमसा हि छन्नं
प्रत्यञ्चमात्मानमपास्तभेदम् ।
मुञ्जादिषीकामिव दृश्यवर्गा-
दुत्कृष्य यः पश्यति मुच्यतेऽसौ ॥७७४॥

अद्वैतमेव खलु पश्यति यश्च विद्वान्
नित्यं चिदेकरसब्रह्मपरामृतं यत् ।
हस्तस्थविल्वसदृशं भवति प्रसिद्धं
निःश्रेयसाधिगमनं विदुषो हि तस्य ॥७७५॥

सत्यं तथाज्ञानमतीव निर्मलं
विकल्पनाभ्यो विपरीतमद्वयम् ।
विज्ञाय सम्यग् यदि निष्ठितो भवे-
दसंशयं निर्वृतिमेति शाश्वतीम् ॥७७६॥

ज्ञानं हि लब्ध्वा परमं हि पावनं
न लिप्यते व्योम इवेह कर्मभिः ।

अनेकजन्मान्तरसञ्चितैर्नरो
विमुच्यतेऽज्ञाननिमित्तपातकैः ॥७७७॥

परस्य देहे न यथाऽभिमानिता
स्वस्यापि तद्वत्परमार्थमीक्ष्य च ।
इदं हि विज्ञानमतीव निर्मलं
सम्प्राप्य मुक्तोऽथ भवेच्च सर्वतः ॥७७८॥

अजोऽहममरो नित्यो ह्यजरोऽभय एव च ।
व्यापकः सर्वदृक् शुद्ध इति विद्वान्न जायते ॥७७९॥

सत्यं ज्ञानमनन्तं यत्कोशानां पञ्चकात्परम् ।
ज्ञात्वा ब्रह्माहमित्येवं भयं तस्य न विद्यते ॥७८०॥

यस्माद् भीताः प्रवर्तन्ते सूर्याग्निपवनादयः ।
तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥७८१॥

वाचारम्भणमात्रत्वात्सुषुप्त्यादित्रिकं ह्यसत् ।
साक्षी सत्याहमित्येवं सत्यसन्धो विमुच्यते ॥७८२॥

अहमेव च भूतेषु सर्वेष्वेको नभो यथा ।
मयि सर्वाणि भूतानि पश्यन्नेवं न जायते ॥७८३॥

सर्वस्यात्माहमेवेति ब्रह्म चेद्विदितं परम् ।
स आत्मा सर्वभूतानामात्मा ह्येषामिति श्रुतेः ॥७८४॥

जीवश्चेत्परमात्मानं स्वात्मानं देवमञ्जसा ।
वेदोपास्यः स देवानां पशुत्वाच्च निवर्तते ॥७८५॥

प्रबोधेन यथा स्वाप्नं सर्वं दुःखं निवर्तते ।
प्रत्यगात्मधिया तद्वद्दुःखित्वं सर्वदात्मनः ॥७८६॥

अहमेव सदानन्दो ह्यसङ्गश्च यथाम्बरम् ।
इत्येवं सत्यसन्धत्वाद्यथा चौरो न बध्यते ॥७८७॥

दृश्यातीतं परं ब्रह्म शुद्धमेकं सदात्मकम् ।
स्वात्मत्वेन हि विज्ञाय भवभयाद्विमुच्यते ॥७८८॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
मृतानां जीवतां मोक्षो वर्तते विदितात्मनाम् ॥७८९॥

स्रष्टारं सर्वलोकानां परमात्मानमव्ययम् ।
ये पश्यन्ति हृषीकेशं ते ह्यमृता भवन्ति हि ॥७९०॥

जीवस्य प्रत्यगात्मानमहङ्कारादिवर्जितम् ।
विशुद्धमद्वयानन्दं विद्वान् ब्रह्माधिगच्छति ॥७९१॥

संन्यस्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरत्येवं ब्रह्मभूयाय कल्पते ॥७९२॥

ज्ञानारामस्य बुद्धस्य सर्वभूताविरोधिनः ।
नोत्क्रान्तिभयमस्तीह परलोकभयं कुतः ॥७९३॥

पञ्चभूतगुणैर्हीनमसङ्गं सच्चिदद्वयम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ॥७९४॥

अगन्धमरसस्पर्शमशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते ॥७९५॥

संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥७९६॥

इदं हि ज्ञानं परमात्मगोचरं
सम्यग् हि वेदान्तविनिश्चितं परम् ।
विमुच्यतेऽस्मिन् यदि निष्ठितो भवे-
न्न लिप्यते व्योम इवेह कर्मभिः ॥७९७॥

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥७९८॥

धर्माधर्मफलैर्योगः शास्त्राद्दृष्टो यथात्मनः ।
शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो ज्ञानात्तथेष्यताम् ॥७९९॥

बुद्ध्यादौ सत्युपाधौ च तथाऽसत्यविशेषता ।
यस्य चेदात्मनो ज्ञानात्तस्य कार्यं कथं भवेत् ॥८८०॥

व्यापिनि विमलानन्दे प्रज्ञानैकरसेऽद्वये ।
उत्पन्नात्मधियो ब्रूत किमन्यत्कार्यमिष्यते ॥८०१॥

स्वयम्प्रकाशं सुखरूपमव्ययं
ब्रह्मामृतं द्वैतप्रपञ्चवर्जितम् ।
विज्ञाय तस्मिन्यदि निष्ठितो भवे-
दसंशयं निर्वृतिमेति शाश्वतीम् ॥८०२॥

यस्त्वखिलानि भूतानि स्वस्मिन्नेव प्रपश्यति ।
तेषु भूतेषु चात्मानं सर्वभूतगुहाशयम् ॥८०३॥

तस्माद्ब्रह्मात्मविज्ञानाज्जीवन्मुक्तस्वरूपतः ।
समत्वस्थितिमाप्नोति विद्वान् संशयवर्जितः ॥८०४॥

निष्कामकर्मणा शुद्धधियो दुःखविवर्जिताः ।
ब्रह्मज्ञानाद् भविष्यन्ति मुमुक्षवो न संशयः ॥८०५॥

परमात्माहमस्मीति पूर्णानन्दचिदात्मकः ।
निश्चित्यैवं पदे तिष्ठेद्यत्र ब्रह्मविदः स्थिताः ॥८०६॥

न तदस्ति जगत्यस्मिन् सपातालसुरालये ।
यद्ब्रह्मात्मविदो ज्ञस्य ह्यवश्यं कर्तव्यं भवेत् ॥८०७॥

यस्मादात्मनि विज्ञाते सर्वदुःखौघनाशतः ।
निःशेषपुरुषार्थाप्तेर्युक्तैव कृतकृत्यता ॥८०८॥

साक्षात्कृत्य परं तत्त्वं वीतरागा महाशयाः ।
आत्मज्ञानप्रसादेन निर्वृतिं परमां ययुः ॥८०९॥

यदायमात्मरूपेण स्वप्रकाशेन सर्वदा ।
ब्रह्मतत्त्वं विजानाति भेदत्रयविवर्जितम् ॥८१०॥

जन्मादिरहितं तद्वद् ध्रुवं विगतविक्रियम् ।
कार्यकारणनिर्मुक्तमानन्दात्मानमद्वयम् ॥८११॥

तदा तदेव प्राप्नोति सर्वदुःखविवर्जितम् ।
नित्यमुक्तस्वभावं यत् परिपूर्णमखण्डितम् ॥८१२॥

आत्मविज्ञानतः शोकः कृतार्थस्यापयास्यति ।
तत एव च सर्वेषां दुःखानां तु छिदिर्भवेत् ॥८१३॥

निर्विशेषं परं ब्रह्म प्रत्यगात्मैकरूपकम् ।
इत्थं जानन्ति ये नित्यममृतास्ते भवन्ति च ॥८१४॥
विकल्पनामपाकृत्य प्राप्य तत्त्वज्ञतां किल ।
अद्वितीयपदं मोक्षमत्यन्तानन्दमाप्नुयात् ॥८१५॥
यत्र तत्र मृतो ज्ञानी परमाक्षरवित् सदा ।
परमात्मानमाप्नोति न तस्योत्क्रान्तिरिष्यते ॥८१६॥

तीर्थे श्वपचगृहे वा
नष्टस्मृतिरपि त्यजन् देहम् ।
ज्ञानसमकालमुक्तः
कैवल्यं याति हतशोकः ॥८१७॥

तद्ब्रह्माहमि तिज्ञात्वा निर्विशेषं निरञ्जनम् ।
सर्वं सर्वगतं शान्तं ब्रह्म सम्पद्यते तदा ॥८१८॥
घटाकाशमिवात्मानं ब्रह्मैव वेत्ति तत्त्वतः ।
स गच्छति निरालम्बं ज्ञानालोकं सनातनम् ॥८१९॥
तृणाग्रेष्वम्बरे भानौ नरनागामरेषु च ।
यस्तिष्ठति तदेवाहमिति ज्ञात्वा न शोचति ॥८२०॥
सर्वसाक्षिणमात्मानं वर्णाश्रमाविवर्जितम् ।
ब्रह्मरूपतया पश्यन् ब्रह्मैव भवति स्वयम् ॥८२१॥
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माप्नोति सनातनम् ॥८२२॥

ज्ञानं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वपातकैः ॥८२३॥

आनन्दात्मानमद्वैतं सर्वभूतनिवासिनम् ।
नभोवत्सर्वगं देवं स्वप्रकाशञ्च निर्गुणम् ॥८२४॥

विज्ञायात्मतया नित्यं जीविनोऽप्यथ वा मृताः ।
भवन्त्यमृतरूपास्ते पुनर्जन्मविवर्जिताः ॥८२५॥

ब्रह्मज्ञानसमुत्पादादानन्दात्मनि सोऽद्वये ।
प्रतितिष्ठति निर्दुःखं यस्मान्नावर्तते पुनः ॥८२६॥

लौकिकानि सुखानीह निष्ठां यान्ति परे सुखे ।
साक्षात्कृतात्मतत्त्वानां प्रत्यक्षं तत्परं सुखम् ॥८२७॥

प्रत्यग्याथात्म्यसम्बोधात्सर्वं येन कृतं भवेत् ।
निःशेषपुरुषार्थाप्तेर्न कार्यं तस्य शिष्यते ॥८२८॥

मुमुक्षोः शुद्धबुद्धेर्हि भवेदात्मावबोधनम् ।
ब्रह्माभेदावगाहि यन्मोक्षामृतफलप्रदम् ॥८२९॥

आत्मज्ञानोदयादूर्ध्वं मोक्षः सिद्धो ह्ययत्नतः ।
पुरुषार्थसमाप्तेश्च कर्तव्यं नास्ति किञ्चन ॥८३०॥

ब्रह्म वेत्तीह यः कश्चित्स आप्नोति परं हि तत् ।
सत्यादिलक्षणं ब्रह्म ब्रह्मविद्याप्रभावतः ॥८३१॥

स्वर्गं यथाग्निहोत्रेण यजमानो ह्यवाप्नुयात् ।
तथा कैवल्यमाप्नोति ब्रह्मविद्ब्रह्मविद्यया ॥८३२॥

अनेकानर्थसंसारसागरे पतितो नरः ।
शुद्धान्तःकरणो ज्ञानात्प्राप्नोति ब्रह्म निर्भयम् ॥८३३॥
क्षेत्रज्ञः करणी ज्ञानं करणं तेन तस्य तत् ।
निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तते ॥८३४॥
अज्ञानकल्पितश्रुत्याचार्यादिरूपचक्षुषा ।
ज्ञानमुत्पद्यते तस्मात् स्थितिः स्याद् ब्रह्मरूपतः ॥८३५॥
ब्रह्मास्मीति धियो जन्मसमकाला विमुक्तता ।
संसारानर्थहानाख्या प्रत्यक्षमनुभूयते ॥८३६॥

जीवन्मुक्तिरितीमां
वदन्त्यवस्थां स्थितात्मसम्बोधाम् ।
बाधितभेदप्रतिभा-
मबाधितात्मावबोधसामर्थ्यात् ॥८३७॥

सर्वमात्मेति वेदान्तजन्यविज्ञानतो भवेत् ।
निःशेषपुरुषार्थाप्तिः सर्वानर्थस्य हानतः ॥८३८॥
ब्रह्मवित्परमाप्नोति शोकन्तरति चात्मवित् ।
प्रतिष्ठां विन्दते स्वस्मिन् यदा स्यादथ सोऽभयः ॥८३९॥
देवं ज्ञात्वा हर्षशोकौ जहात्यत्रैव धैर्यवान् ।
कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥८४०॥
ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक् ।
नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ॥८४१॥

सर्वस्य जगतो हेतुः सर्वव्यापी परः पुमान् ।
ज्ञानलक्षणया भक्त्या ह्यात्मगोचरयाऽऽप्यते ॥८४२॥

आत्मानं विन्दते यस्तु सर्वभूतगुहाशयम् ।
श्लोकेन यदि वाऽर्धेन क्षीणं तस्य प्रयोजनम् ॥८४३॥

ज्ञानान्मृत्युप्रहाणिः स्यात् प्राप्यते चोत्तमं पदम् ।
ज्ञानेन मोक्षो विज्ञेयो ज्ञानं मोक्षस्य ज्ञापकम् ॥८४४॥

निर्विशेषं सदानन्दं स्वयंज्योतिषमव्ययम् ।
परमं ब्रह्म यो वेद ब्रह्मैव भवति हि सः ॥८४५॥

वेदान्तवाक्यविषयं रचयन् विचारं
ज्ञानप्रयोजनमथापि च सूत्रकारः ॥
अर्थात् फलं वितथहानिमुवाच तस्य
जीवेश्वरैक्यविषयस्य फलेतरत्वात् ॥८४६॥

ब्रह्मनिष्ठस्य कैवल्योपदेशसूत्रणादपि ।
विनिश्चितं विजानीमो ज्ञानस्य मुक्तिहेतुताम् ॥८४७॥

ब्रह्मणि प्रतिबुद्धस्य तद्भावमस्य शास्ति हि ।
यदा ह्येवैष इत्यादि शास्त्रं भेदजुगुप्सया ॥८४८॥

सदात्मनि ब्रह्मणि तिष्ठतो मुनेः
पूर्णाद्वयानन्दमयात्मना सदा ।
मोक्षोपदेशं भगवान्मुनिर्ब्रुवन्
विद्याफलं मुक्तिमुवाच च स्फुटम् ॥८४९॥

अनन्यशेषेऽखिलकारणे च
सत्ये चिदानन्दवपुष्यनन्ते ।
प्रोवाच बुद्धस्य तदात्मभावं
पुच्छत्वशङ्काविनिवर्तनाय ॥८५०॥

आचार्यवान्नरो वेद परमात्मानमद्वयम् ।
तावदेव चिरं तस्य मोक्षाय गमनं प्रति ॥८५१॥
प्रारब्धं कर्म यावन्नो क्षीयते भोगतोऽखिलम् ।
तस्मिंश्च कर्माणि क्षीणे ब्रह्म सम्पद्यते ध्रुवम् ॥८५२॥
इत्यादिवचनैः स्पष्टं स्वतन्त्राद्ब्रह्मज्ञानतः ।
मोक्षः प्रसिद्ध्यतीत्याह भगवान् बादरायणः ॥८५३॥
गत्युत्क्रान्ती प्रतिषिद्ध्य श्रुतिस्मृतिपुराणतः ।
ज्ञानिनो ब्रह्मभावश्च तेनैव साधितः खलु ॥८५४॥
श्रुतिस्मृत्युक्तिभिरित्थं श्रूयते मुक्तिहेतुता ।
हठस्य राजयोगस्य संशयो जायते ततः ॥८५५॥

॥ इति प्रथमः प्रकाशः ॥

# सन्त ऊचुः ।

ज्ञानं ह्येव वदन्ति शास्त्रनिपुणा बन्धस्य विध्वंसकं ।
नानाशास्त्रप्रमाणकं श्रुतिमतं नान्यत्ततो दृश्यते ॥
सर्पादेर्वितथस्य नाशकमिह ज्ञानं यथा लौकिकं ।
ज्ञानं बन्धनिवर्तकं दृढतरं मिथ्यात्वहेतोस्तथा ॥१॥

दृश्यमानमिदं सर्वं मिथ्यैवेति श्रुतिर्जगौ ।
नाना किञ्चन नास्तीहेत्यत्युद्घोषपुरस्सरम् ॥२॥

वेदान्ताः प्रवदन्ति मङ्गलकरं ज्ञानं सघोषं किल
ह्यन्यच्चापि निवारयन्ति सततं मुक्तेर्भृशं साधनम् ॥
यूयञ्चापि स्वकं मनश्च कुरुथ ज्ञाने ध्रुवं भोऽनघाः
नान्यत्रापि यतध्वमार्तिनुतये युष्मत्सृतिर्नैव सा ॥३॥

जानेऽहमेतं पुरुषं महान्त-
मादित्यवर्णन्तमसः परस्तात् ॥
अत्येति मृत्युं खलु तं विदित्वा
पन्थाः किलान्यस्त्वयनाय नास्ति ॥४॥

यो ब्रह्मा सशिवोऽक्षरश्च परमः सेन्द्रः सविष्णुः स्वराट् ।
स प्राणः स च वीतिहोत्रसमयौ चन्द्रः स सर्वं जगत् ॥
साकारञ्च निराकृतिर्यदपि वै भूतं तथा भावि यद्—
ज्ञात्वा तं ह्यतिक्रामतीह मरणं नान्या सृतिर्मुक्तये ॥५॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥६॥

वृत्तिस्थो हरतीह यश्च सकलं विश्वं समूलं ध्रुवं
हत्वा वृत्तिमपि प्रतिष्ठति निजे शुद्धेऽव्यये चात्मनि ॥
आनन्देऽथ च दुःखलेशविधुरे ज्ञानैकमूर्तौ परे
शान्तेऽशेषविशेषशून्यवपुषि ब्रह्मण्यजे नान्यथा ॥७॥

वशी यः सर्वेषां स्थितिगतिमतां वै तनुभृतां
अविद्याख्यं बीजं नट इव तनोतीह बहुधा ।
तमात्मस्थं नित्यं खलु सपदि पश्यन्ति कृतिनः
सुखं नित्यं तेषां भवति न कदाचिद् बहुविदाम् ॥८॥

य एकहंसो भुवनस्य मध्ये
विदाहको यश्च समूलमस्य ।
वेदान्तवाक्यार्थप्रथाभिधः सँ-
स्तज्ज्ञानतोऽन्यो न च मोक्षमार्गः ॥९॥

सम्भाव्यते नैव यथाम्बरस्य
सम्वेष्टनं जातु हि चर्मतुल्यम् ।
तथा ह्यविज्ञाय परात्मतत्त्वं
सम्भाव्यते नैव कदापि मोक्षः ॥१०॥

अकोविदानां गमनीयलोकाः
ये सन्ति वृत्तास्तमसा छदेन ।
गच्छन्ति ते तानपहाय देहं
जानन्ति नो मूढतमा बत स्वम् ॥११॥

ज्ञेयं प्रमाणैरखिलैः सदैव
ब्रह्मात्मसंस्थं तमसावृतं यत् ।
स्वयम्प्रकाशं पुरुषार्थसिद्ध्यै
नातः परं किञ्चन वेदितव्यम् ॥१२॥

परात्मायं लोको दशम इव येन ह्यविदित-
स्त्ववेत्तारं जीवं मृतमपि च पिण्डग्रहणतः ।
न दोषान् शोकादीनपनयन्नपीशो ह्यवति तं
विना ज्ञानं दम्भात्परमपदमाप्नोति न खलु ॥१३॥

य एतदक्षरं ब्रह्माविज्ञायात्मानमद्वयम् ।
लोकादस्मान्मृतो याति संसारं सोऽधिगच्छति ॥१४॥

य एतदक्षरं ब्रह्म विज्ञायात्मानमद्वयम् ।
लोकादस्मान्म्रियतेऽसौ मुच्यते नात्र संशयः ॥१५॥

यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ।
आनन्दात्मानमाज्ञाय साक्षाद्देही सनातनम् ॥१६॥

सुखी भवति सर्वत्र ह्यन्यथा सुखता कुतः ।
विना ज्ञानं सुखप्राप्तिर्नैव सम्भाव्यते यतः ॥१७॥

नान्यदस्त्यात्मविज्ञानाच्छ्रेयः साधनमित्यपि ।
सनत्कुमारदेवर्ष्याख्यायिकातोऽवगम्यते ॥१८॥

येन हि सर्वविज्ञानसाधनशक्तिसंयुतः ।
सनत्कुमारं देवर्षिर्नारदः शरणं गतः ॥१९॥

श्रुतं युष्मत्सदृशेभ्यस्तरति शोकमात्मवित् ।
सोऽहमनात्मवित्त्वेन शोचामि किल सर्वदा ॥२०॥

आत्मज्ञानोडुपेनैव शोकात्तारयतु हि माम् ।
भवान्नैवान्यस्त्वस्माद्धि शोकात्तारयितुं क्षमः ॥२१॥

सनत्कुमारो भगवान् शरण्यो
देवर्षिणा प्रार्थित एव सँश्च ।
शोकस्य पारं गमयत्यरं तं
ज्ञानोडुपेनैव सुदुर्लभेन ॥२२॥

शरीरेऽत्रैव तद्‌ब्रह्म विजानीयाद्यदा तदा ।
प्राप्नोत्यमृतं नो चेद्विनष्टिर्महती भवेत् ॥२३॥

अवेदीदात्मानन्त्वपहतमलं साक्षिणमिह
तदा सत्यं प्राप्तं भवति फलमत्राशु यदि नो ।
तदा नष्टिर्दीर्घा निखिलगतमाज्ञाय परमं
भवन्ति प्रेत्यास्मादमृतफलभाजो हि सुधियः ॥२४॥

कष्टा संसारदुःखप्रचुरसुरनरप्रेततिर्यक्त्वप्राप्ति-
स्तस्मादत्रैव विद्यात्स्वमजमितरथा स्याद्धि दीर्घा विनष्टिः ।
ज्ञात्वैवं सर्वभूतेष्वनुगतममृतं स्वात्मतत्त्वं तु सन्तो
व्यावृत्यास्माद्धि लोकादुपरतमतयो ब्रह्मभावं व्रजन्ति ॥२५॥

अस्मिन् जन्मनि भो देवा जानीते पुरुषो हि तम् ।
ब्रह्मचर्यादिसम्पन्नः स्वल्पात्क्लेशात्तदा फलम् ॥२६॥

महदेष समाप्नोति ज्ञानन्दात्मानमद्वयम् ।
नित्यमुक्तस्वभावञ्च निर्विशेषमनाशिनम् ॥२७॥

अस्मिन् जन्मनि नैनश्चेज्जानीयाद्देवमायया ।
मोहितश्च ततस्त्वस्य कामादयो दुरात्मनः ॥२८॥

विनष्टिं महतीं कुर्युर्दुःखाद्दुःखप्रदां सदा ।
कामादिभिर्जितत्वाद्धि निन्दाया भाजनत्वतः ॥२९॥
जीवन्मृतो हि सततं नानादेहग्रहैरिह ।
म्रियते जायते भूयः कामी दुःखी च सर्वदा ॥३०॥
आशापाशशतैर्बद्धः क्रोधलोभवशं गतः ।
नष्टस्तस्माद्विनष्टेर्हि वर्जनीया महात्मना ॥३१॥
अस्मिन्नेव शरीरेऽसावात्मा ज्ञेयः सुरोत्तमाः ।
आनन्दाब्धिर्विभुर्नित्यः प्रत्यग्ब्रह्मैक्यलक्षणः ॥३२॥
यद्यत्र भवतामात्मबोधो नैव भविष्यति ।
ततो विनष्टिर्महती भवतां देहदैष्यति ॥३३॥
बहिर्गतांश्च तान्कामान्प्राप्नुवन्त्यल्पबुद्धयः ।
अविद्याकामकर्माख्यमृत्योः पाशं विशन्ति ते ॥३४॥
अमृतत्वं ध्रुवं ज्ञात्वा धीरा नेच्छन्ति तानिह ।
जन्माद्यनर्थव्राताद्धि मुच्यते नात्र संशयः ॥३५॥
कार्योपाधितया विभाति यदिदं तं शुद्धमीशं विदु-
र्मायोपाधितया मतञ्च विमलं प्रत्यञ्चमत्यान्तरम् ।
तत्रैवं सति ये विमूढमतयः पश्यन्ति नानासमं
मृत्योर्मृत्युमिह प्रयान्ति कृतिनो नैवं ययुस्ते परम् ॥३६॥
शास्त्राचार्यविबोधितप्रतिपदाज्ज्ञातव्यमेकात्मकं
ज्ञाते किञ्चन नास्ति तत्र विविधं मायाविलासात्मकम्

येऽविद्यातिमिरावृता इह परे पश्यन्ति नानासमं
मृत्योर्मृत्युमथो व्रजन्ति सुधियो नैवं ययुस्ते परम् ॥३७॥

न प्रकाशं विना ध्वस्तिस्तमसो दृश्यते यथा ।
ज्ञानमज्ञाननाशाय नियतं साधनं तथा ॥३८॥

इदं हि विश्वं पुरुषान्नचान्य-
ततोऽस्म्यहं ब्रह्म परामृतं तत् ।
जानाति यस्तन्निहितं गुहाया-
मज्ञानग्रन्थिं खलु नाशयेत्सः ॥३९॥

एवं सर्वगतं सर्वरूपमात्मानमव्ययम् ।
सर्वभूतहृदम्भोजे वसन्तं भेदवर्जितम् ॥४०॥

ब्रह्मामृतमहमेव सर्वाधिष्ठानमद्वयम् ।
यो वेद पुरुषः स स्यादविद्याग्रन्थिवर्जितः ॥४१॥

शुद्धचेताः पुमानेष आत्मानमवलोकयेत् ।
उत्पन्नब्रह्मविज्ञानो ह्यविद्यायाः परं व्रजेत् ॥४२॥

श्रवणादेः फलं प्रोक्तं दर्शनं वेदवादिभिः ।
यस्मिन्सति भवेन्नेयमविद्या दुःखकारिणी ॥४३॥

आचार्यागमसंस्कृतेन मनसा ब्रह्मैक्यबोधादिह
नानात्वप्रतिभासहेतुरनिशं नश्यत्यविद्या भृशम् ।
नाना नास्ति भविष्यतीह परमे ब्रह्मण्यतः किञ्चन
ह्यज्ञो गच्छति मृत्युमेव सततं विज्ञोऽथ मुक्तो भवेत् ॥४४॥

वशी यः सर्वस्यास्य हि जगत एकोऽखिलगतो
य आत्मा सर्वेषामपि सुरमुखानां तनुभृताम् ।
स्वमेकञ्चात्मानं बहु कुरुत आस्तेऽपि च मतौ
तमीशं दृष्ट्वाजं सुखमिह सुधीरेव लभते ॥४५॥

सर्वभूतान्तरात्मैको जगद्वशेऽस्य वर्तते ।
एकमेव स्वरूपञ्च ह्यनेकधा करोति यः ॥४६॥

बुद्धौ स्थितं तमात्मानं साक्षादनुभवन्ति ये ।
धीरास्तेषां सुखं नित्यं नेतरेषां कदाचन ॥४७॥

अनित्यानां नित्यः किल मतिमतां चेतन इति
ददात्येकः कामान् बहुविधजनानामखिलवित् ।
तमात्मस्थं धीरा विदुरविरतं ये सुकृतिनो
ह्यलभ्यं त्वल्पज्ञैरुपशमसुखं यान्ति खलु ते ॥४८॥

विज्ञातुमात्मानमिहैव शक्तः
शरीरपातात्प्रथमं स विद्वान् ।
विमुच्यते नो यदि तर्हि जन्म
गृह्णाति लोकेषु ततो ह्यबोधात् ॥४९॥

एतावदेव खलु वेद परं न चातो
ज्ञातव्यमस्ति गुरुराह च पिप्पलादः ।
श्रुत्वावधार्य वचनञ्च तमर्चयन्तः
शिष्याः स्वकीयकुशलञ्च विशङ्कमाहुः ॥५०॥

त्वं नः पिता यो हि तमःपयोधे-
र्जनुर्जरारोगमृतिग्रहाच्च ।
पारं परं तारयसीह चास्मान्
विद्याप्लवेनैव सुदुर्लभेन ॥५१॥

भवता कर्णधारेण तारिता दुस्तरं वयम् ।
अविद्यावारिधिं यत्र ग्राहाः कामादयः श्रिताः ॥५२॥

छिन्नास्ते संशया ब्रह्मन् कृतार्थाश्च वयं कृताः ।
दर्शितश्च परं ब्रह्म मायातः परतो हि यत् ॥५३॥

एवं हि भारद्वाजादीन् पिप्पलादो महानृषिः ।
विद्यारूपप्लवेनैव तारितवान् भवार्णवात् ॥५४॥

सेतुर्भवाब्धेस्तरणाय दर्शनं
तमेकमात्मानमतो विजानथ ।
यस्मिञ्जगत्सर्वमिदं समर्पितं
विमुञ्चथान्यानि वचांसि कोविदाः ॥५५॥

मिथ्याज्ञानतिरस्कृतेर्विरहितो यश्च प्रमादोज्झितो
न्यासज्ञानसमन्वितो यतिवरः प्राप्नोति ब्रह्माद्वयम् ।
यस्त्वेवंविधसाधनैश्च विकलः कामाद्यधीनः किल
तेनात्मा न च लभ्यतेऽनवरतं मृत्युर्जनिर्लभ्यते ॥५६॥

असत्समानोऽपुरुषार्थभागसौ
यो ब्रह्म जानाति परं ह्यसद्यदि ।

जानाति प्रत्यस्तविशेषमस्ति तद्
विज्ञेयमेनं परमात्मवद्विदुः ॥५७॥

अदृश्ये चानात्म्ये वचनविधुरेऽथानिलयने
यदात्मानं पश्येदपगतभयं ब्रह्मणि परे ।
तदाप्नोति प्राज्ञो भयविरहितं ब्रह्म परमं
यदाऽल्पं पश्येदन्तरमपि भयं तस्य भवति ॥५८॥

विद्वान्यथाप्नोति परं तथैव
प्राप्नोत्यविद्वानपि तं समत्वात् ।
प्रापप्यशङ्कां श्रुतिराह सम्यग्
विद्वांसमेवास्य परस्य प्राप्तिम् ॥५९॥

दृष्टे ब्रह्मणि तत्प्राप्त्या विदुषोऽतिशयोऽस्ति कः ।
अविदुषोऽपि तत्प्राप्तिरविशिष्टात्मरूपतः ॥६०॥

इति चेदखिलानन्दानामाप्तिरधिका भवेत् ।
तत्त्वविद्ब्रह्मरूपेण सर्वानन्दान्सहाश्नुते ॥६१॥

अविद्वान् विषयानन्दान् कामयते सदैव हि ।
ब्रह्मानन्दस्य ते सर्वे लेशा विद्वान्न काङ्क्षते ॥६२॥

विदुषोऽतिशयो ह्येष ब्रह्मप्राप्तौ भवेत्किल ।
ब्रह्मणः प्राप्तये तस्माज्ज्ञानमेव समाश्रयेत् ॥६३॥

तत्त्ववित् सत्यसन्धो हि ब्रह्माहमितिबोधतः ।
मुच्यतेऽनृतसन्धोऽज्ञो जायते म्रियतेऽपि च ॥६४॥

सत्याभिसन्धः सति सम्प्रपद्य
नावर्तते जन्मन आत्मवेत्ता ।
मिथ्याभिसन्धस्त्वमरादिभावं
प्रपद्यते वा मशकादिभावम् ॥६४॥

पाटच्चरो यद्वदुपैति बन्धं
दुःखं स्वमन्तर्हृदि सन्निधाय
तथैव गच्छत्यनृताभिसन्धो
बन्धश्च दुःखञ्च कदापि नेष्टम् ॥६६॥

अतस्करास्तिष्ठति मोदमानो
विहाय बन्धञ्च यथैव दुःखम् ।
तथैव सत्यात्मसुखाभिसन्धो
निरस्य बन्धञ्च विहाय दुःखम् ॥६७॥

देहपाते समे तस्मिन् विदुषोऽविदुषश्च हि ।
विशेषोऽयं यतो विद्वान् पुनर्जन्म न गच्छति ॥६८॥

अज्ञानाख्यं जगद्बीजं तन्नास्तीति विनिश्चयात् ।
तदभावे कुतो जन्म ब्रह्मैकत्वं विजानतः ॥६९॥

अविद्वाँस्तु जनिमृत्युप्रवाहं प्रतिपद्यते ।
यतो ज्ञानं विना नैव मुक्तिर्भवति कुत्राचित् ॥७०॥

अविदुषो मुमूर्षोर्हि सत्सम्पत्तिक्रमश्च यः ।
तादृशो विदुषोऽपि स्यादेतावाँस्तु विशिष्यते ॥७१॥

अविद्वान् सत उत्थाय ह्यज्ञातादात्मरूपतः ।
गच्छेद् व्याघ्रादिभावं वा किं वा देवादिरूपताम् ॥७२॥

शास्त्राचार्योपदेशाद्धि ज्ञानदीपं प्रकाशितम् ।
सद्ब्रह्मात्मानमाविश्य विद्वान्नावर्तते पुनः ॥ ७३ ॥

श्रुत्वा प्रजापतिवचोऽपि विरोचनोऽसौ
सत्यं परं ह्यनुपलभ्य पराबभूव ।
ब्रह्माद्वितीयमजमन्तविहीनमेक-
मिन्द्रोऽनुभूय परमं त्वमृतो बभूव ॥ ७४ ॥

यः कोऽपि ब्रह्म जानाति स एव तद्ब्रह्मवेदिति ।
ब्रह्मात्मज्ञानत एव भवत्येवामृतोऽखिलः ॥ ७५ ॥

देवेषु यो यः प्रतिबुद्धवांश्च
तथर्षिषु ब्रह्म सदद्वितीयम् ।
तथा मनुष्येष्वपि यो ह्यवेत्तत्
स एव नूनं निखिलात्मकोऽभूत् ॥ ७६ ॥

यो देवानामृषीणां वा मध्ये ब्रह्मावबुद्धवान् ।
सर्वमसावसावेव ह्यभून्नान्यस्तु कश्चन ॥ ७७ ॥

मनुष्याणां तथा मध्ये विद्वानेव सर्वमभूत् ।
विद्याऽविद्ये किलैतस्मात्सर्वासर्वत्वकारणे ॥ ७८ ॥

वस्त्वन्तरेष्वनात्मज्ञो ह्यात्मपुत्राद्यपेक्षितम् ।
इच्छन्ननुभवँस्तापं जायते म्रियतेऽपि च ॥ ७९ ॥

सर्वात्मदर्शिनस्तस्य वस्त्वन्तरमपश्यतः ।
तदसम्भव इत्याह ह्यात्मानं चेदिति श्रुतिः ॥ ८० ॥

अन्येऽपि ये विदुर्ब्रह्म तदमृता भवन्ति ते ।
अथानेवं विदुर्ये तु दुःखमेवापियन्ति ते ॥ ८१ ॥

अभेदमिह यः पश्येत्प्राप्नोति परमामृतम् ।
पश्येद्य इह नानात्वं मृत्योर्मृत्युं स गच्छति ॥ ८२ ॥

प्रत्यग्ब्रह्मैक्यबोधो यः स एको मोक्षकारणम् ।
मुच्यतेऽभेददर्शी यो भेददर्शी न मुच्यते ॥ ८३ ॥

पुण्यं नाकरवं कस्मात् पापन्तु कृतवान् कुतः ।
इति चिन्ता तपत्यज्ञं ज्ञानिनं न तपत्यसौ ॥ ८४ ॥

वाचा वा मनसा मातृवधादीन् कुरुते यदि ।
तथापि ज्ञानिनो मोक्षो नह्येतैर्विनिवार्यते ॥ ८५ ॥

नापरं न परं यस्मात्किञ्चिदस्ति तदद्वयम् ।
ज्ञात्वैव मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ८६ ॥

विशुद्धं परमात्मानं विदित्वैव विमुच्यते ।
विना ज्ञानं न मुक्तिः स्यादितरैः कोटिसाधनैः ॥ ८७ ॥

ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् ।
बोधादेव हि पुंसोऽस्य भयं नश्यति नान्यथा ॥ ८८ ॥

अनधीतो यथावेदो नार्थज्ञानेन पालयेत् ।
अकृता वा कृषिः पाति नाकर्तारं फलार्थिनम् ॥ ८९ ॥

तथा स्वात्माप्यविज्ञातो मुमुक्षुं मोक्षदानतः ।
न पालयत्यतो मुक्तिर्विना ज्ञानं न कस्यचित् ॥ ९० ॥

आत्मा साक्षाद्ब्रह्मैव सन्सम्यग्धीजन्ममात्रतः ।
अविद्याध्वस्तिमापेक्ष्य ब्रह्माप्येतीति सुस्थितम् ॥ ९१ ॥

प्रत्यग्ज्ञानशिखिध्वस्ते भ्रान्तिज्ञाने सहेतुके ।
नेतिनेतिस्वरूपत्वाद् विदेहो भवति बुधः ॥ ९२ ॥

जीवन्नविद्याकामादिबन्धैर्मुक्तो मृतः पुनः ।
शरीरग्रहणाभावाद्विदेहः सन् विमुच्यते ॥ ९३ ॥

नानात्मत्वभ्रमोच्छित्त्यै तत्तद्देहेष्ववस्थितम् ।
निश्चित्यैवात्मरूपेण धीरा याति कृतार्थताम् ॥ ९४ ॥

ब्रह्मैवाज्ञानतो जीवो भूत्वात्मानमवेत्पुनः ।
अहम्ब्रह्मेति तद्बाधात्सर्वात्मकमभूत्तदा ॥ ९५ ॥

अब्रह्मानात्मताहेतावात्माज्ञाने निवर्तिते ।
आत्मानमेव ब्रह्मेति विज्ञानात्प्रतिपद्यते ॥ ९६ ॥

अब्रह्मानात्मतासंज्ञमारोपद्वयमस्ति यत् ।
ब्रह्मात्मास्मीति बोधेन समूलं विनिवर्तते ॥ ९७ ॥

अस्मीति वर्तमानोक्तेर्विद्याकालैव मुक्तता ।
सिद्धाऽतोऽसौ न साध्या स्यादग्निहोत्रादिकार्यवत् ॥ ९८ ॥

स्वतः सर्वात्मकं ब्रह्म भात्यसर्वमिव भ्रमात् ।
विद्यया भ्रान्तिबाधेऽस्य सर्वात्मताऽवशिष्यते ॥ ९९ ॥

तस्मात्तत्सर्वमभवादिति वाक्येन वेदनात् ।
उच्यते सर्वभावाप्तिरसर्वत्वस्य बाधतः ॥ १०० ॥

यावज्ज्ञानं न चोदेति तावन्माया भयङ्करा ।
कामादिसिंहद्वारेण ज्ञानादेव विनश्यति ॥ १०१ ॥

ज्ञानमपि तदेवास्ति येन भूयो न जायते ।
ज्ञानायातो यतितव्यं भयशान्तिर्न चान्यथा ॥ १०२॥

वैराग्याभ्यासवशतस्तथा तत्त्वावबोधनात् ।
संसारात्तीर्यते तेन तेष्वेवाभ्यासमाचरेत् ॥ १०३ ॥

आत्मदृष्टिरजातैषा संसारभयदायिनी ।
जातमात्रैव सर्वेषां दुःखानां क्षयकारिणी ॥ १०४ ॥

अविद्याहेतुको बन्धस्तन्नाशो मोक्ष उच्यते ।
ज्ञानादेव हि तन्नाशो नान्योपायशतैरपि ॥ १०५ ॥

अविद्यायाः स्वरूपं हि नेदं ब्रह्मेति निश्चयः ।
अयमेव क्षयस्तस्या ब्रह्मेदमिति निश्चयः ॥१०६॥

अज्ञातात्मनिबन्धोऽस्ति विज्ञातात्मा विमुच्यते ।
अतश्च स्वात्मनात्मायं विज्ञातव्यः प्रयत्नतः ॥ १०७॥

यथायमागतः कश्चिज्जाग्रतः स्वप्नविभ्रमः ।
तथा विलीयते सर्वस्तत्त्वज्ञानबलात्क्वचित् ॥१०८॥

ज्ञानं हि परमं श्रेयो मुक्तिस्तेनैव प्राप्यते ।
ज्ञानेन ज्ञेयमभ्येत्य पुनर्जीवो न जायते ॥ १०९ ॥

यदैवैवं चितो रूपं पूर्णं ज्ञातमखण्डितम् ।
तदैव तीर्णसंसारः परमेश्वरतां गतः ॥ ११० ॥

प्रत्यग् दृष्ट्या परिपूर्णमप्रमेयचिदात्मकम् ।
साक्षादनुभवन्नेव निर्वाणमाधिगच्छति ॥ १११ ॥

जगतः कारणं मूलाज्ञानमेव न चेतरत् ।
ज्ञानेन गलिते तस्मिन् गलति सकलं जगत् ॥ ११२ ॥

जीवो हि स्वात्मनोऽज्ञानाज्जायते म्रियतेऽपि च ।
प्रत्यग्ब्रह्मात्मनो ज्ञानाद्ब्रह्मात्मनावतिष्ठते ॥ ११३ ॥

यावज्जीवो न जानाति परं ब्रह्म सनातनम् ।
तावत्संसरति मोहाज्ज्ञात्वा तद्भवति स्वयम् ॥ ११४ ॥

अज्ञानोपाधिरात्माऽयं जगतो धारको मतः ।
ज्ञानादज्ञाननाशे तु मुक्त एवावतिष्ठते ॥ ११५ ॥

ब्रह्म जीवजगच्छून्यमज्ञानाद् भाति तन्मयम् ।
सर्वं दृश्यं चिदाकाशे तत्त्वज्ञानान्न पश्यति ॥ ११६ ॥

ज्ञानादेवात्मनात्मानं शान्तमानन्दविग्रहम् ।
स्वयमानन्दरूपः सन् प्रारब्धान्तेऽधिगच्छति ॥ ११७ ॥

श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् ।
सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ११८ ॥

तपस्तीर्थं जपो दानं पवित्राणीतराणि च ।
नालङ्कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥ ११९ ॥

अविद्या संसृतेर्हेतुर्विद्या तस्या निवर्तिका ।
तस्माद्यत्नः सदा कार्यो विद्याभ्यासे मुमुक्षुभिः ॥१२०॥

अज्ञानमात्रतो बन्धो ज्ञानमात्रेण मुक्तता ।
यतो ज्ञानं विना नान्यदज्ञानस्य विनाशकृत् ॥ १२१ ॥

प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ।
सा च स्वोत्पत्तितो नान्यत्तमोध्वस्तावपेक्षते ॥ १२२ ॥

सर्वकर्मसमुच्छेदि ज्ञानं वेदान्तमानजम् ।
कर्ममूलतमोघाति प्रसिद्धं सर्वतो यतः ॥ १२३ ॥

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सहकार्येण सर्वथैव हि बाध्यते ॥ १२४ ॥

श्रवणादिपरिपाकादुत्पन्नात्मावबोधतः ।
हत्वाऽविद्यां धियैवेयात्तद्विष्णोः परमं पदम् ॥ १२५ ॥

ज्ञानमज्ञानघात्येव व्याधभावनयाञ्चितः ।
राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ॥ १२६ ॥

यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ।
लब्धैकात्म्यस्मृतेर्व्येति सर्वाऽविद्या सकार्यका ॥ १२७ ॥

पूर्णं ब्रह्मैव निर्वाणं तदपूर्णमविद्यया ।
आभासते मृषैवातो यथाभूतात्मविद्यया ।
प्रध्वस्तायामविद्यायां पूर्णमेवावतिष्ठते ॥ १२८ ॥

अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते ।

निवृत्तिस्तमसो नैव प्रकाशेन विनान्यतः ॥ १२९॥

अतोऽशेषमहानर्थहेत्वात्माज्ञानहानिकृत् ।
प्रत्यग्याथात्म्यविज्ञानं भास्करस्तमसो यथा ॥ १३० ॥

प्रत्यग्याथात्म्यविद्यैव निःशेषपुरुषार्थकृत् ।
पुरुषार्थार्थिभिस्तत्त्वविद्या सम्पाद्यतां ततः ॥ १३१ ॥

प्रत्यगज्ञानमेवैकं भीतिहेतुर्भवेत्किल ।
ब्रह्मविद्यामृते नान्यद् भयहेतुविनाशकृत् ॥ १३२॥

प्रत्यग्याथात्म्यसम्बोधान्नान्यो हेतुः समीक्ष्यते ।
संसारानर्थप्रध्वस्तौ प्रमाणाभावतः किल ॥ १३३ ॥

देवादीनामतो यो यः पदार्थशोधनादिना ।
प्रत्यग्बुद्ध्यत तद्ब्रह्म स एवेह तदभवत् ॥ १३४ ॥

आत्मज्ञानं विहायान्यन्नास्ति मोक्षस्य साधनम् ।
इति निश्चयकारि स्यात्स एवेत्यवधारणम् ॥ १३५ ॥

एतर्ह्यपि तु तद्ब्रह्म यो यः साक्षादबुध्यत ।
स एव तदभूत्तस्मान्माहात्म्यं नात्र कारणम् ॥ १३६ ॥

ब्रह्मप्राप्त्यन्तरायो हि तदज्ञानं परात्मनः ।
विज्ञानादेव तद्ध्वस्तौ ब्रह्मप्राप्तिर्न चान्यथा ॥ १३७ ॥

स्वरूपलाभमात्रेण सकार्याज्ञाननाशकम् ।
ज्ञानमतश्च नो विद्वान् कार्यान्तरमपेक्षते ॥ १३८॥

सम्यग् ज्ञानाग्निना दग्धाज्ञानतत्कार्यरूपिणः ।

बाध्यस्य सकृन्निवृत्तेः किं कार्यमवशिष्यते ॥ १३९ ॥
अनाद्यन्तावभासात्मा परमात्मेह विद्यते ।
इत्येको निश्चयः स्फारः सम्यग्ज्ञानं विदुर्बुधाः ॥१४०॥
तमोमात्रान्तरायत्वात्पुरुषार्थस्य नापरम् ।
अज्ञानध्वंसिनो बोधात्किञ्चित्साधनमिष्यते ॥ १४१ ॥
आत्मैवेदं जगत्सर्वं सत्यज्ञानादिलक्षणम् ।
इत्येवं ब्रह्म यो वेत्ति तस्यैवेह कृतार्थता ॥ १४२ ॥
प्रत्यक्तत्वतमोध्वंसव्यतिरेकेण मुक्तये ।
अपेक्षते यतो नान्यत्किञ्चित्साधनमण्वपि ॥ १४३ ॥
प्रत्यक्कूटस्थमात्मानं पश्यन्ब्रह्मैकरूपतः ।
कृतार्थो हि भवेदाशु नैवान्यथा कथञ्चन ॥ १४४ ॥
सर्वानर्थनिवृत्तिश्च सर्वानन्दाप्तिरेव च ।
प्रत्यग्विज्ञानमात्रेण संसिद्ध्यति न चान्यथा ॥ १४५ ॥
अज्ञानमात्रव्यवधेर्ब्रह्मरूपफलस्य हि ।
ब्रह्मज्ञानातिरेकेण तत्प्राप्तौ नान्यसाधनम् ॥ १४६ ॥
आयासेन हि महता यतोऽश्विभ्यां प्रसाधिता ।
ब्रह्मविद्या ततो विद्मो न मुक्तौ साधनं परम् ॥ १४७ ॥
अशेषपुरुषार्थेषु कैवल्योत्तमता यथा ।
साधनेष्वपि सर्वेषु विद्यैवोत्तमसाधनम् ॥ १४८ ॥
विद्यां समाश्रयेत्तस्मान्मुमुक्षुः सर्वथैव हि ।

साक्षान्मोक्षप्रदत्वेन विहाय साधनान्तरम् ॥ १४९ ॥

ज्ञानादन्यन्न चैवास्ति साक्षान्मोक्षस्य साधनम् ।
ज्ञानमेव सुसम्पाद्यं सर्वथाऽतो मुमुक्षुभिः ॥ १५० ॥
अविद्यानाशमात्रश्च मोक्ष आत्मन इष्यते ।
सम्यग्ज्ञानातिरेकेण नाविद्याया विनाशकृत् ॥ १५१ ॥
ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शने ।
न च विद्या न चाविद्या नास्ति जगच्चराचरम् ॥१५२॥

मरुभूमौ जलं यद्वन्मरुभूमात्रमेव हि ।
तथैवेदं जगत्सर्वं चिन्मात्रं स्वप्रबोधतः ॥ १५३ ॥
आगमाज्जातमात्रं तत्स्वकार्याज्ञाननाशकम् ।
ज्ञानं स्वफलसिद्ध्यर्थं नान्यत्किञ्चिदपेक्षते ॥ १५४ ॥

चिदात्मन्यशनायादिसम्बन्धोऽज्ञानहेतुकः ।
प्रत्यग्ब्रह्मैक्यविज्ञानात्समूलमेव नश्यति ॥ १५५॥
ज्ञानाद्ध्वस्तात्ममोहस्य कुतोऽविद्योत्थवस्तुभिः ।
प्रतीचोऽस्त्यभिसम्बन्धो ह्यशनायादिलक्षणैः ॥ १५६ ॥
नित्यप्राप्तोऽपि चात्माऽयमप्राप्तोऽज्ञानतो यदि ।
अज्ञाने ज्ञानतः क्षीणे निर्विशेषोऽवतिष्ठते ॥ १५७ ॥
अव्यावृत्ताननुगतप्रत्यक्प्रवृत्तवाक्यतः ।
ज्ञानेनाशेषमज्ञानं दग्ध्वा पूर्णोऽवशिष्यते ॥ १५८ ॥
प्रत्यग्याथात्म्यदृष्ट्यात्मा कारणं स्वतमोऽवधि ।

बाधित्वाऽज्ञानसंसारौ याति शुद्धैकरूपताम् ॥ १५९ ॥
प्रत्यग्ब्रह्मैक्यविज्ञानात्तदज्ञाननिवृत्तितः ।
तज्जन्यबन्धविध्वस्तिरात्यन्तिकी भवेत्फलम् ॥ १६० ॥
प्रत्यग्दृशां विमोक्षाय निबन्धाय पराग्दृशाम् ।
अपामार्गलतेवायं विरुद्धफलदो भवः ॥ १६१ ॥
भयन्त्वेकान्ततोऽविद्याकार्यमाहुर्विपश्चितः ।
ततो विज्ञाततत्त्वानां भीतिर्नास्ति कुतश्चन ॥ १६२ ॥
याज्ञवल्क्यः प्रत्याख्यैवं जनकं पुनरब्रवीत् ।
प्राप्तोऽस्यभयमित्येवमविद्याया विनाशतः ॥ १६३ ॥
ज्ञानतुल्याममन्वानो दक्षिणां गुरवे नृपः ।
अभयं त्वामिति प्राह याज्ञवल्क्यं स पार्थिवः ॥ १६४ ॥
उचिता दक्षिणैषैव योक्तेहाभयलक्षणा ।
सम्यग्ज्ञानाख्यदानस्य नान्या योग्यास्ति दक्षिणा १६५
ज्ञानानुरूपामेवातो दक्षिणां दित्सुरब्रवीत् ।
अभयं त्वामिति नृपः स्वकीयं ज्ञानमुक्तवान् ॥ १६६ ॥
यदज्ञानाज्जगत्यास्मिंस्तीव्रानर्थपरम्परा ।
ज्ञानाच्च मुक्तिः संसारात्तद्ब्रह्मामृतमस्म्यहम् ॥ १६७ ॥
अक्षरं यो विदित्वैवं म्रियते हि कलेवरात् ।
निवर्तते स कार्पण्यात्तज्ज्ञानाद्ध्वान्तबाधतः ॥ १६८ ॥
अक्षराज्ञानतः पुंसां कार्पण्यं न निवर्तते ।

परिज्ञानाच्च तस्यैव कृत्स्नकार्पण्यनिः सृतिः ॥ १६९ ॥
स्वोत्पत्तावेव विद्येयं हेत्वन्तरमपेक्षते ।
प्रत्यगात्मतमोध्वस्तौ नासावन्यदपेक्षते ॥ १७० ॥
स्वरूपलाभमात्रेण यतोऽविद्यां निहन्त्यतः ।
व्यापारमपि विद्येयं नानुसरति दात्रवत् ॥ १७१ ॥
प्रागप्यैकात्म्यविज्ञानादविचारितसिद्धिका ।
अविद्या प्रत्यग्याथात्म्यभास्वद्विज्ञानभास्कर-
प्रसूतिमात्रादेवास्या ध्वस्तिरात्यन्तिकी भवेत् ॥ १७२ ॥
प्रत्यक्तत्त्वापरिज्ञानात्स्यात्संसारस्य कल्पनम् ।
भोक्तृभोग्यादिमिथ्याधीस्तत्त्वज्ञानान्निवर्तते ॥ १७३ ॥
अविद्याकृतमेवेदं संसारित्वं न तु स्वतः ।
अतोऽविद्यासमुच्छित्तौ ज्ञानान्मुक्तिः परात्मनः ॥ १७४ ॥
तत्त्वमस्यादिवाक्यादबाध्यात्माकारवृत्तितः ।
संसारहेत्वज्ञानस्य नाशो मुक्तिगिरोच्यते ॥ १७५ ॥
साक्षात्कारे समुत्पन्ने वाक्यादात्मैक्यगोचरे ।
सकार्याज्ञानस्यात्यन्तनाशो भवत्यसंशयम् ॥ १७६ ॥
प्रतीचि जायते ज्ञानं वाक्यादज्ञानहानिकृत् ।
ज्ञानाद्ध्वस्ते किलाज्ञाने ध्वस्ते द्वैते सहेतुके ॥ १७७ ॥
सर्वरूपो भवेदात्मा मनोवाचामगोचरः ।
स एष पर उत्कर्षो विद्यायाः सम्प्रदर्शितः ॥ १७८ ॥

ब्रह्मैव सन् स्वतो यस्माद्ब्रह्माप्येत्यवबोधतः ।
ततोऽविद्यानिरासेन मुक्तिर्नैवान्यसाधनात् ॥ १७९ ॥
संसारकारणध्वंसि ज्ञानं चेत्परमात्मनः ।
नित्यमुक्तस्वभावस्य बन्धस्यावसरः कुतः ॥ १८० ॥
अविद्यायाः समुच्छित्तौ साक्षादात्मावबोधतः ।
आत्मा ब्रह्मैव सन्नेष ब्रह्म प्राप्नोति चिद्घनम् ॥ १८१ ॥
यथोक्तबोधविरहादस्यानर्थपरम्परा ।
अविद्यामात्रहेतुस्तथा यावज्ज्ञानं प्रवर्त्तते ॥ १८२ ॥
यतोऽविद्याभिसम्बन्धे संसारानर्थसङ्गतिः ।
तद्ध्वस्तावात्मनो ज्ञानात्पुरुषार्थः समाप्यते ॥ १८३ ॥
अज्ञानात्संसरत्यात्मा नानाऽऽपत्सङ्कुलो भृशम् ।
ज्ञानादज्ञानविध्वस्तौ कृतकृत्यो भवेदिह ॥ १८४ ॥
अविद्या ध्वस्तिमापेक्ष्य सम्यग्धीजन्ममात्रतः ।
आत्मा ब्रह्मैव सन् साक्षाद्ब्रह्माप्येतीति भण्यते ॥ १८५ ॥
अशेषानर्थहेतुं तामविद्यां शास्त्रजा मतिः ।
यतो निहन्ति तस्माद्धि शास्त्रसाफल्यमस्ति हि ॥ १८६ ॥
यस्मादज्ञानतोऽब्रह्म मन्यतेऽज्ञानहानतः ।
सम्यग्ज्ञानसमुत्पत्तावत्रैव ब्रह्म सोऽश्नुते ॥ १८७ ॥
मृतिर्जन्मादिबन्धस्य ब्रह्मज्ञानं हि प्रोच्यते ।
यदा ज्ञानजनिस्तस्मात्तदा बन्धस्य संक्षयः ॥ १८८ ॥

सम्यगालोच्यमाने तु शास्त्रे न ज्ञानतः पृथक् ।
साक्षान्मोक्षस्य हेतुर्हि लभ्यते वेदवादिभिः ॥१८९॥
तीर्यतेऽनेन विस्पष्टं संसारानर्थसागरः ।
यतोऽतो वितरः पन्थाः प्रत्यग् बोधोऽभिधीयते ॥१९०॥
तेनानेन पथा धीराः प्रत्यगज्ञाननाशिना ।
ब्रह्माप्नुवन्ति निर्द्वन्द्वाः प्राप्तमज्ञानहानतः ॥१९१॥
सर्वसंसृत्यनर्थस्य हेत्वविद्याविनाशकृत् ।
नान्योऽस्ति ब्रह्मसम्बोधात् श्रुतिरुद्घोषतोऽवदत् ॥१९२॥
मुक्तौ तमोऽतिरेकेण नान्तरायोऽन्य इष्यते ।
ज्ञानादज्ञानविध्वस्तौ मुक्तः सन्वा विमुच्यते ॥१९३॥
सम्यग् ब्रह्मात्मसम्बोधान्मोहोच्छित्तेरनन्तरम् ।
स्वत एव यतो मुक्ता मुच्यन्तेऽज्ञानहानतः ॥१९४॥
निःशेषदुःखसम्बन्धहेतूच्छित्तेः प्रबोधतः ।
नातो देहादिदुःखेन दुःखित्वं प्रत्यगात्मनः ॥१९५॥
भूयोऽसह्यमहादुःखनीड़देहप्रवेशने ।
हेत्वविद्यासमुच्छित्तेर्देहश्चानुविशेत् कुतः ॥१९६॥
न देहो नेन्द्रियप्राणो न मनोबुद्ध्यहंकृतिः ।
न चित्तं नैव माया च न च व्योमादिकं जगत् ॥१९७॥
निःशेषानर्थसम्प्राप्तिकैवल्यानाप्तिकृत्तमः ।
तच्चेज्ज्ञानादपध्वस्तं कर्तव्यं नावशिष्यते ॥१९८॥

कृतं सर्वं हि कर्तव्यं ज्ञातं ज्ञातव्यमेव च ।
सम्यग्ज्ञानोदयात्सर्वं त्यक्तव्यं त्यक्तमेव च ॥१९९॥
प्राप्तव्यमखिलं प्राप्तमित्येवं कृतकृत्यता ।
प्रत्यग्याथात्म्यसम्मोहध्वंसात्सम्यक् प्रबोधतः ॥२००॥
प्राप्ताशेषपुमर्थस्य प्रत्यग्याथात्म्यबोधतः ।
दग्धात्मतमसः पुंसः कर्तव्यं नावशिष्यते ॥२०१॥
संसारकारणध्वंसि यत्तु ज्ञानं विमुक्तिदम् ।
स्वरूपलाभमात्रेण कृतकृत्यत्वमानयेत् ॥२०२॥
आत्मज्ञाने समुत्पन्नेऽशेषा विद्या विनश्यति ।
अविद्याया विनाशेन विशेषज्ञानसंक्षये ॥२०३॥
आनन्दात्मा स्वयं ज्योतिः पुनर्दुःखं न गच्छति ।
सर्वदुःखविनिर्मुक्तो ब्रह्मरूपेण तिष्ठति ॥२०४॥
कर्तृकर्मादिरहिते भेदगन्धविवर्जिते ।
स्वप्रभे ब्रह्मविज्ञानादानन्दात्मस्वरूपिणि ॥२०५॥
अविद्यायां विलीनायां कः किं केनाधिगच्छति ।
मुक्तस्तिष्ठति ब्रह्मात्मा त्रिपुटीद्वैतवर्जितः ॥२०६॥
उत्पन्ने ब्रह्मविज्ञानेऽशेषा माया विनश्यति ।
दुःखमेति न मुक्तोऽयं मायानाशात्कदाचन ॥२०७॥
संसाराब्धिं तमोबीजं नानाजीवसमाकुलम् ।
ब्रह्मविद्याप्लवेनैव तरत्येव विचक्षणः ॥२०८॥

ज्ञानादविद्याव्युच्छित्तौ स्यादवस्थानमात्मनि ।
न चाविद्याप्रहाणं स्याद्ब्रह्मज्ञानं विना क्वचित् ॥२०९॥
दशमोऽस्मीत्यतो ज्ञानादज्ञानध्वस्तिवर्त्मना ।
दशमाप्तिवदाप्तिः स्याद्ब्रह्मणोऽज्ञानहानतः ॥२१०॥
ब्रह्माहमिति वाक्योत्थज्ञानादपास्य तत्तमः ।
कार्यकारणहीनं तद्ब्रह्माप्नोति स्वरूपतः ॥२११॥
विद्वानेवैति तद्ब्रह्म निर्भयं सच्चिदद्वयम् ।
तमोमात्रान्तरायत्वादविद्वान्नैति कर्हिचित् ॥२१२॥
ज्ञानादनर्थहेत्वज्ञानस्य निवृत्तिद्वारतः ।
ब्रह्मप्राप्तिर्मता यस्मान्न प्राप्नोत्यविद्वांस्ततः ॥२१३॥
अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ।
अन्धं भुवनमन्धस्य प्रकाशं तु सुचक्षुषाम् ॥२१४॥
अतोऽज्ञाननिषेधेन ह्यपरोक्षात्मज्ञानतः ।
विदुष एव ब्रह्माप्तिर्नान्यस्यापि तदात्मनः ॥२१५॥
अहं ब्रह्मेतिविज्ञानात्सकार्याज्ञाननाशतः ।
शुद्धं बुद्धं स्वतो मुक्तं प्रत्यग् ब्रह्मावशिष्यते ॥२१६॥
तत्त्वमस्यादिवाक्योत्थं विज्ञानं स्वफलं किल ।
अन्यानपेक्षयैवेह साधयति पुमर्थताम् ॥२१७॥
भयहेतुर्द्वितीयं स्यात्तच्चाविद्यासमुद्भवम् ।
दग्धायां विद्यया तस्यां न कुतश्चन भीर्भवेत् ॥२१८॥

एवमात्मपरिज्ञानाद्ध्वस्ताविद्यो भवेद्यदा ।
अकामश्च निष्कर्मा स्यात्सर्वसंशयवर्जितः ॥२१९॥
पञ्चकोशातिवर्त्यात्मज्ञानभानूदयात्किल ।
दग्ध्वा पञ्चापि कोशांस्तान् शाम्यत्यात्मनि दीपवत् ॥२२०॥
अहं ममेति मिथ्याधीः समूलं विद्यया हता ।
दृगात्मन्यद्वये दृष्टे न भयादितमोहतेः ॥२२१॥
स्रजीव कल्पिताहिर्ना तद्भयादाकुलेन्द्रियः ।
आलोचयेद्यथा तत्त्वं भीध्वस्त्यै ह्यधिकारवान् ॥२२२॥
आलोचयँस्तथा तत्त्वमपास्ताज्ञानतद्भवम् ।
अद्वितीयसुखं साक्षाद्ददर्शैकात्म्यमात्मनि ॥२२३॥
प्रत्यग्याथात्म्यविज्ञानशिखिप्लुष्टमहत्तमाः ।
प्राप्ताशेषपुमर्थोऽयं स्वं कृतार्थममन्यत ॥२२४॥
प्रत्यगज्ञानहेतूत्थशास्त्राचार्यादिसाधनात् ।
अद्वितीयमथैकात्म्यं प्रत्यपद्यत ज्ञानतः ॥२२५॥
यः कार्यकारणाभ्यां च भिन्नोऽज्ञानात्प्रतीयते ।
ज्ञानेनाज्ञाननाशाद्धि प्राप्नोत्येकरसात्मताम् ॥२२६॥
प्रत्यग्याथात्म्यविज्ञानान्निरस्य कार्यकारणे ।
निरुपाधिकरूपेण स्वरूपस्थितिमाप्नुयात् ॥२२७॥
यस्मादात्मनि विज्ञाते सर्वं ज्ञातं भवेदिति ।
अज्ञानस्य च दग्धत्वात्सिद्धा पूर्णपुमर्थता ॥२२८॥

यत्साक्षादितिवाक्योत्थप्रत्यग्याथात्म्यगोचरात् ।
विज्ञानात्तमसो दाहात्सर्वानर्थपरिक्षयः ॥२२९॥

तत्र को मोह इत्येवं मन्त्रवर्णोऽपि नो जगौ ।
समूलानर्थविध्वंसमेकत्वमनुपश्यतः ॥२३०॥

मुक्त्यन्तरायसम्मोहं विध्वंस्यैकात्म्यबोधतः ।
सर्वानर्थप्रहाणं स्यादानन्दावाप्तिरेव च ॥२३१॥

निर्विशेषं सदानन्दमात्मानमपरोक्षतः ।
निश्चित्य तद्बलादेवानर्थराशेर्विमुच्यते ॥२३२॥

आत्मज्ञानाग्निना दग्धे स्वात्माज्ञाने ह्यशेषतः ।
परिपूर्णपुमर्थस्य प्राप्तिरविघ्नतो भवेत् ॥२३३॥

ध्वस्तेऽतोऽज्ञानतोऽज्ञाने ब्रह्मास्मीतिभवेत्फलम् ।
बन्धस्य विनिवृत्तिश्च ह्यानन्दावाप्तिरेव च ॥२३४॥

प्रत्यगात्मनि विज्ञाते नाज्ञातमवशिष्यते ।
ज्ञानात्पूर्णसुखप्राप्तिर्दुःखहानिर्भवेत्फलम् ॥२३५॥

नित्यलब्धैकरूपस्याज्ञानादलब्धिरात्मनः ।
यथैवं तस्यलाभोऽपि तज्ज्ञानान्नान्यतो भवेत् ॥२३६॥

अज्ञानात्परिच्छिन्नत्वं गत्वा स्थितश्च यः पुमान् ।
सर्वात्मज्ञानतोऽज्ञानं हत्वा ब्रह्माभवद्धि सः ॥२३७॥

पूर्वमप्यात्मविज्ञानाद्ब्रह्मैवायं स्वतो ह्यभूत् ।
यतोऽतस्तत्त्वसम्बोधाद्ब्रह्म ब्रह्म प्रपद्यते ॥२३८॥

निःशेषपुरुषार्थश्च ज्ञानादेव ह्यवाप्नुयात् ।
दुःखहानिः सुखं पूर्णं निःशेषपुरुषार्थता ॥२३९॥
सर्वानर्थस्य मूलाय ह्यविद्याया विनाशतः ।
विद्ययाऽशेषबन्धस्य ध्वंसेनाप्नोति मुक्तताम् ॥२४०॥
आत्मन्येव यतोऽज्ञानमतस्तत्त्वज्ञानतः ।
नष्टेऽज्ञाने सकार्येऽथ स्वात्मैवैकोऽवशिष्यते ॥२४१॥
विद्योदयात्पुरा ब्रह्म नात्मन्येवममन्यत ।
विद्ययात्मानमाज्ञाय तदात्मैवाभवत्स्वतः ॥२४२॥
वाक्योत्थसम्यग्विज्ञानात्प्रध्वस्ततमसो यतेः ।
विपर्यासस्य नष्टत्वात् सर्वमात्मैव शिष्यते ॥२४३॥
अनात्मदर्शनं त्यक्त्वा प्रत्यङ्मात्रेक्षणं हि यत् ।
तस्मादज्ञानतत्कार्यनिवृत्तेः केवलोऽभवत् ॥२४४॥
निर्विशेषात्मज्ञानेन सकार्याज्ञानहानतः ।
शुद्धं ब्रह्मात्मनस्तत्त्वं साक्षादेवाधिगम्यते ॥२४५॥
तत्त्वविज्ञानतोऽज्ञाने भेदहेतौ निवर्तिते ।
अव्यावृत्ताननुगतं सर्वं ब्रह्माभवदत्तदा ॥२४६॥
अज्ञानविनिवृत्त्यैवावस्थानं पूर्णरूपतः ।
मुक्तिर्विज्ञानकालैव न साध्या कर्मकृत्यवत् ॥२४७॥
प्रत्यग्याथात्म्यविज्ञानादविद्यातज्जनाशतः ।
स्वभावतः परिपूर्णं ब्रह्माभवदिति श्रुतेः ॥२४८॥

पदार्थशोधनं कृत्वा यो वेदात्मानमद्वयम् ।
स इदं सर्वमात्मैव भवत्यज्ञाननाशतः ॥२४९॥

तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः ।
इन्द्रादयोऽपि नैवालं कैवल्याप्तिनिवारणे ॥२५०॥

इन्द्राद्यैश्वर्यमुत्क्रम्य गतो विद्वानतः किल ।
तस्याकैवल्यभावायोद्युक्ता अपि न चेशते ॥२५१॥

यतो विघ्नकृतामात्मा ब्रह्मात्मैकत्वविद्भवेत् ।
नात्मनः प्रतिकूलेऽतो देवादीनां कृतिर्भवेत् ॥२५२॥

ईशेशितव्यसम्बन्धः प्रत्यगज्ञानहेतुजः ।
सम्यग्ज्ञानात्तमोध्वस्तौ देवादीनामपीश्वरः ॥२५३॥

अज्ञाननाशरूपत्वात्फलस्य कैवल्यात्मनः ।
तत्प्राप्तेर्ज्ञानकालत्वाद्विघ्नस्यावसरः कुतः ॥२५४॥

यतोऽविद्यैव सर्वोऽयं प्रपञ्चो नान्यलक्षणः ।
तत्त्वं ब्रह्म तज्ज्ञानात्परं ब्रह्म समश्नुते ॥२५५॥

प्रतीचि साक्षाद्विज्ञाते ज्ञातव्यं नावशिष्यते ।
निःशेषतस्तमोध्वस्तेः पुमर्थश्च समाप्यते ॥२५६॥

दग्धे कार्ये च निःशेषकारणे चात्मज्ञानतः ।
निर्विशेषात्मरूपेण स्वात्मन्येवावतिष्ठते ॥२५७॥

प्रमाणाद्युक्तितश्चैव द्वैतमिथ्यात्वनिश्चये ।
समूलानर्थध्वस्तिः स्याद्वाक्यात्तदर्थज्ञानतः २५८॥

मायातत्कार्यविलये सम्यक्तत्त्वावबोधतः ।
ततः शुद्धश्चिदेवात्मा व्योमवन्निरुपाधिकः ॥२५९॥
परमानन्दरूपो यो निर्विशेषसदात्मकः ।
अद्वितीयो विभुर्नित्यो मुक्तरूपोऽवतिष्ठते ॥२६०॥
सम्यग्ज्ञानाग्निसन्दग्धप्रत्यगज्ञानमात्रतः ।
हित्वाऽज्ञानोत्थमखिलं ब्रह्मैव ब्रह्म यात्यथ ॥२६१॥
प्रत्यक्तत्त्वे विनिर्ज्ञाते नेतिनेतीतिवाक्यतः ।
कारणेन सहानात्मा नाभूदस्ति भविष्यति ॥२६२॥
प्रत्यङ्मोहतदुत्थस्य प्रत्यग्याथात्म्यबोधतः ।
बाधितत्वादतो ब्रह्म केवलं ह्यवशिष्यते ॥२६३॥
यथार्थात्मावबोधेन ध्वस्तसंसारकारणः ।
निषिद्धाशेषसंसारो विमुक्तो ना विमुच्यते ॥२६४॥
ब्रह्मात्मैकत्वबोधेन सकार्याज्ञाननाशतः ।
सर्वानर्थनिवृत्तिश्च सुखावाप्तिरशेषतः ॥२६५॥
ब्रह्मरूपं हि कैवल्यं नित्यप्राप्तं स्वरूपतः ।
तदावरकमज्ञानं ज्ञानं तस्य निवर्तकम् ॥२६६॥
औपचारिकमेवातो ज्ञानसाध्यत्वमुच्यते ।
अज्ञानध्वंसतो नान्यद्विज्ञानस्य फलं यतः ॥२६७॥
संसरत्यन्यथाज्ञानात्सम्यग्ज्ञानाद्विमुच्यते ।
आत्मानं यो यथा वेत्ति फलमाप्नोति तादृशम् ॥२६८॥

स्वरूपलाभमात्रेण सम्यग्बोधोऽखिलं तमः ।
यतो हन्ति ततस्तस्योत्पत्तौ प्रयत्नवान्भवेत् ॥२६९॥

आत्मनो ब्रह्मता यस्माद्ब्रह्मणोऽप्यात्मता स्वतः ।
तमोमात्रान्तरायत्वात्तद्ध्वस्तावेव साऽऽप्यते ॥२७०॥

सर्वमात्मेति सम्यग्धीजन्मनैवाखिलं तमः ।
नाशमेति ततः संसारानर्थो नावशिष्यते ॥२७१॥

प्रत्यङ्मात्रे क्षणादात्ममोहतज्जनिराकृतेः ।
असम्भवाद्द्वितीयस्य स्यादद्वितीयाचिन्मयम्॥२७२॥

निविवृत्तात्मध्वान्तस्य सम्यग्ज्ञानोदये सति ।
विज्ञानघनमानन्दमैकात्म्यमवतिष्ठते ॥२७३॥

कर्तृत्वादिविभागोऽयमज्ञानमात्रहेतुकः ।
ज्ञानाद्धेतुसमुच्छित्तावात्ममात्रैकशेषता ॥२७४॥

योऽसावविद्यया देही संसारी चाप्यभूत्पुरा ।
विद्ययाऽज्ञाननाशेऽसौ परं ब्रह्माभिवर्तते ॥२७५॥

निवृत्ताज्ञानतत्कार्यः संविन्मात्रस्वरूपकः ।
अनन्तापार आत्मैव स्वमहिम्नि व्यवस्थितः ॥२७६॥

तमसो ज्ञानविध्वस्तावब्रह्मानात्मताहतेः ।
अपूर्वाद्यात्मकं ब्रह्माभिन्नं विद्वान्प्रपद्यते ॥२७७॥

सकार्याज्ञानबाधस्य प्रत्यग्याथात्म्यज्ञानतः ।
प्रत्यङ्मात्रावशेषत्वात्स्यामपूर्वादिमानहम् ॥२७८॥

उत्पन्नात्मप्रबोधानां स्त्रीयाज्ञानतदुद्भवम् ।
सम्यग्ज्ञानाग्निना नित्यं दग्धं समनुवर्तते ॥२७९॥

दग्धमोहान्धकारस्य प्रत्यग्बोधाग्निना मुनेः ।
ऐकात्म्ये वर्तमानस्य ब्रह्मात्मास्य परायणम् ॥२८०॥

तद्विदो ब्रह्मणश्चेह भेदहेतोरसम्भवात् ।
ब्रह्मैव ब्रह्मवित्साक्षादुपचारात्परायणम् ॥२८१॥

स्वतो बुद्धं यतो वस्तु स्वतः शुद्धमतोऽद्वयम् ।
स्वतो मुक्तं पुनर्ज्ञानात्सिद्धमज्ञानहानतः ॥२८२॥

तस्मादात्मपरिज्ञानादनन्यसाधनो हि यः ।
निरस्तातिशयानन्दो भवतीत्येव निर्णयः ॥२८३॥

ब्रह्मास्मीति परिज्ञानात्प्रत्यगज्ञानहानतः ।
यदा सर्वे प्रमुच्यन्ते कामास्तदाऽमृतो भवेत् ॥२८४॥

ब्रह्मैव सन्तो विज्ञानात्प्रागपि ब्रह्मबोधतः ।
भवामो ब्रह्म नानाप्तं दशमो दशमं यथा ॥२८५॥

दृष्टे स्वात्मनि सर्वस्य ह्यज्ञानस्य विनाशतः ।
सर्वमात्मतया पश्यन् कृतकृत्यत्वमाप्नुयात् ॥२८६॥

साक्षाद्ब्रह्माहमस्मीति स्वात्मानमवगच्छति ।
तज्ज्ञानादेव कैवल्यं लब्ध्वा कृतकृत्यो भवेत् ॥२८७॥

ज्ञानमज्ञाननाशाय नियतं साधनान्त्विवति ।
नष्टेऽज्ञाने हि संसारशूलं विनश्यति ध्रुवम् ॥२८८॥

ज्ञानाद्धिततमं नान्यन्मनुष्यायास्ति किञ्चन ।
सुखावाप्त्यै समूलस्य दुःखस्य च विनाशने ॥२८९॥

आनन्दात्माहमस्मीति ज्ञानमद्वयगोचरम् ।
अस्माद्धिततमं नान्यत्स्वात्मन्यज्ञाननाशनम् ॥२९०॥

एवं मामात्मरूपेण विजानीहि प्रतर्दन ।
एतद्धिततमं मन्ये मनुष्याय न चापरम् ॥२९१॥

एवं हिततमं प्राह स्वात्मज्ञानं शतक्रतुः ।
प्रतर्दनाय सर्वज्ञः सत्यपाशवशङ्गतः ॥२९२॥

ब्रह्म स्वात्मन एवैतज्ज्ञानात्सर्वात्मतां गतम् ।
सर्वात्मतासमाप्त्यर्थं स्वात्मा ज्ञेयो नरैरपि ॥२९३॥

ब्रह्म नैव हि ताद्भिन्नं जन्तोः कस्यचिदात्मनः ।
आत्मनो ब्रह्मणो यस्माद्भेदः कोऽपि न विद्यते ॥२९४॥

ततः सर्वात्मताप्राप्तिरेकया ब्रह्मविद्यया ।
मनुष्या यद्धि मन्यते नानृतं तत्कदाचन ॥२९५॥

ज्ञानादेव यतो ब्रह्म सर्वमेतदभूत्पुरा ।
विजानन्नेव ह्यद्यापि ब्रह्म सर्वात्मकं भवेत् ॥२९६॥

ब्रह्म सर्वात्मतां प्राप्तं यथैव ब्रह्मविद्यया ।
विराडादिस्तथा प्राप्तः प्राप्स्यन्प्राप्नोति चापरः ॥२९७॥

विद्ययैव यथा ब्रह्म सर्वात्मकमभूद्धि तत् ।
सर्वात्मकस्तथान्योऽपि स्यात्तथैव न संशयः ॥२९८॥

मानवो वा मुनिर्वापि देवो वा दानवोऽथवा ।
धीमानन्योऽपि ब्रह्म स्याज्ज्ञानादेव न चान्यथा ॥२९९॥

ब्रह्म सर्वात्मकं प्राप्ता बहवोऽत्र द्विजोत्तमाः ।
असुरा मुनयः सर्वे ज्ञानादेवात्मगोचरात् ॥३००॥

ब्रह्मज्ञानं विना नायं कामो नश्यति सर्वथा ।
कामनाशाद्विना नायं जगद्वृक्षो विनश्यति ॥३०१॥

आत्माऽज्ञानादयं जातः कामः कामाज्जगत्त्रयम् ।
आत्मज्ञानाद्विनश्येत्तत् सर्वमज्ञानमात्मगम् ॥३०२॥

ये जानन्त्येतमात्मानममृतास्ते भवन्ति हि ।
ये न जानन्ति ते सर्वे दुःखमेवापियन्ति हि ॥३०३॥

स्वान्तःस्थितं परं ब्रह्म ब्रह्मचर्यादिसाधनाः ।
धीराः पश्यन्ति विद्वांसस्तेषां शान्तिर्भवेद्ध्रुवा ॥३०४॥

दुःखानां मोक्षसम्प्राप्त्या नेतरेषां कदाचन ।
तेषां दुःखानि सततमत्यर्थं प्राप्नुवन्ति हि ॥३०५॥

कार्यकारणनिर्मुक्तं ब्रह्मारूपमनामयम् ।
तज्ज्ञानाद्यान्त्यमृतं ते दुःखं गच्छन्त्यथेतरे ॥३०६॥

आत्मविज्ञानतो धीरा न शोकं यान्ति कर्हिचित् ।
तस्य चाज्ञानतो ह्यन्ये शोचन्तीह सदैव हि ॥३०७॥

शोकोऽज्ञानसमुत्थोऽयमज्ञान स्वात्मबोधनात् ।
विनष्टं केन शोकःस्यादहेतुर्विदुषोऽस्य सः ॥३०८॥

आत्मानं हृदये सन्तं गुरुशास्त्रोपदेशतः ।
अनुपश्यन्ति ये धीरा ब्रह्मचर्यादिसाधनाः ॥३०९॥

शाश्वतं मोक्षसंज्ञं स्यात्सुखं तेषां महात्मनाम् ।
अन्येषां दुःखमखिलं संसाराख्यं भवेत्सदा ॥३१०॥

लोकान्तरेषु दुष्प्रापमात्मज्ञानं यतस्ततः ।
अस्मिन्नेव शरीरे हि स्वाधीने सुलभेऽपि च ॥३११॥

आत्मनोऽनुभवः साक्षात् सम्पाद्यो मुक्तिमिच्छता ।
सत्यात्मानुभवे साक्षान्मोक्षमाप्नोति नान्यथा ॥३१२॥

उत्पन्नं यस्य विज्ञानमहम्ब्रह्मेति केवलम् ।
तं प्रत्यदर्शनं याति माया नैवापरान्प्रति ॥३१३॥

बुद्धिस्थं परमात्मानं साक्षाज्जानन्ति सूरयः ।
शाश्वतं हि सुखं तेषां नेतरेषां कदाचन ॥३१४॥

विद्वानेव हि संयाति ज्ञात्वानन्दात्मरूपकम् ।
विदेहो वाथवा जीवन् सुखं नित्यात्मरूपकम् ॥३१५॥

अहंब्रह्मेतिविज्ञानात्प्राज्ञं सुकृतदुष्कृते ।
एतं हि तपतो नैते यथान्यं भेददर्शिनम् ॥३१६॥

पापं तरेदयं सर्वं साज्ञानं ब्रह्मबोधतः ।
सर्वशोकविनिर्मुक्तः कामादिपरिवर्जितः ॥३१७॥

ब्रह्मात्मैकत्वबोधेन सकार्याज्ञानबाधतः ।
कारणाभावतो ह्येव शोकाद्यवसरः कुतः ॥३१८॥

स्वभावाद्बलवानात्माऽज्ञानाद्दुर्बलतां गतः ।
ज्ञानादज्ञाननाशे तु दौर्बल्यं तद्विनश्यति ॥३१९॥
अभिव्यक्तिमवाप्नोति बलं स्वाभाविकं यतः ।
तस्माद्विदुषि धर्मादेस्तापकत्वं न चास्ति हि ॥३२०॥
ज्ञानलब्धबलत्वेनाविद्याग्रन्थ्यादिरूपकात् ।
पुनर्जननपर्यन्तात्कृत्स्नबन्धाद्विमुच्यते ॥३२१॥
आनन्दात्मानमात्मस्थं स्वप्रभं दुःखवर्जितम् ।
ब्रह्माद्वयं निराकारं निर्विकल्पं निरञ्जनम् ॥३२२॥
साक्षात्कृत्यैव तं तत्र ब्रह्मलोके यथाश्रुति ।
यतयः परिमुच्यन्ते नान्यथा तेऽपि कर्हिचित् ॥३२३॥
मोक्षो ब्रह्मैव कथितं सर्वैरेव महात्मभिः ।
आवरणविमुक्तं यत्तच्चाज्ञानात्मकं मतम् ॥३२४॥
अज्ञानं ज्ञानतः सर्वं लयं याति नचान्यथा ।
यस्याज्ञानं हि लोके स्यात्तज्ज्ञानात्तल्लयं व्रजेत् ॥३२५॥
आनन्दात्मनि देवेशे सर्वभेदविवर्जिते ।
मायैषा ह्यात्मविज्ञानाद्विनश्यति न चान्यथा ॥३२६॥
माया पिशाचीजन्तूनां भवभीतिकरी सदा ।
आत्मज्ञानाभिधं मन्त्रं दृष्ट्वा नाशं प्रयाति सा ॥३२७॥
शान्त्यादिगुणसम्पन्नो मुमुक्षुः सर्वदा ततः ।
सम्पादयेदिदं ज्ञानमितिशास्त्रार्थ ईरितः ॥३२८॥

एतावदेव कर्तव्यं पुरुषेण मुमुक्षुणा ।
नातः परं परं कुर्वन्पतिष्यति न संशयः ॥३२९॥

मिथ्याभूता ह्यविद्याया बन्धनस्य हि कारणम् ।
ब्रह्मज्ञानं विना सा तु नान्तं याति कुतोऽपि हि ॥३३०॥

ब्रह्मज्ञानविहीनानां स्वर्गिणामपि देहिनाम् ।
ब्रह्मलोकस्थितानाञ्च सुखं नैवास्ति किञ्चन ॥३३१॥

आत्मज्ञानविहीनत्वादात्महन्तार ईरिताः ।
ते सर्वे ह्यात्महन्तॄणां दुःखमेवं श्रुतं यतः ॥३३२॥

अद्वैतदर्शिनो ब्रह्म नित्यामृतं समाप्नुयात् ।
द्वैतं हि पश्यतो नित्यं मृत्योर्मृत्युः समाप्नुयात् ॥३३३॥

मायया रहितो यद्वद् गन्धर्वनगरं परैः ।
गगने दृश्यमानञ्च न पश्यति कदाचन ॥३३४॥

आनन्दात्मनि सांसारं दृश्यमानं तथापरैः ।
मायया रहितो विद्वान्न पश्यति कदाचन ॥३३५॥

एवं येन विदुर्मन्दा भूमात्मानं विमोहिताः ।
जायन्ते च म्रियन्ते च सततं दुःखजीविनः ॥३३६॥

जीवस्य ह्यात्मबोधो यो जायते भाग्ययोगतः ।
सावस्था दुर्लभा नॄणां चतुर्थी कस्यचिद्भवेत् ॥३३७॥

स्थूलं सूक्ष्मं तथाऽज्ञानं पुरत्रयमुदीरितम् ।
जीवस्य चतुर्थीप्राप्तौ नाशमेति न चान्यथा ॥३३८॥

आत्मानं स्वामिनं लोकमदृष्ट्वा म्रियते तु यः ।
न पालयति लोकोऽज्ञं शोकमोहभयादितः ॥३३९॥
विद्वांसं स्वात्मलोकज्ञं म्रियमाणं शरीरतः ।
तं पालयति लोकोऽयं शोकमोहादिबन्धनात् ॥३४०॥
सर्वान्वेदानधीत्यापि बुद्ध्वा तदर्थमेव च ।
आत्मतत्त्वमजानानो ह्यकृतार्थो बभूव सः ॥३४१॥
श्वेतकेतुः पित्रादिष्टं सच्चिदानन्दमद्वयम् ।
प्रत्यग्ब्रह्म परिज्ञाय कृतकृत्यो बभूव ह ॥३४२॥
आनन्दात्माहमस्मीति साक्षात्कृत्य परं विभुम् ।
अविद्यां तरति कृत्स्नां नान्या पन्था विमुक्तये ॥३४३॥
ब्रह्मात्मावगमादेव हेयोपादेयशून्यतः ॥
सर्वक्लेशप्रहाणाद्धि पुरुषार्थः प्रसिद्ध्यति ॥३४४॥
विद्वानेव ततो याति मत्वानन्दात्मरूपकम् ।
विदेहो वाऽथवा जीवन्सुखं नित्यात्मरूपकम् ॥३४५॥
यावन्न जायते ज्ञानं सन्देहादिविवर्जितम् ।
तावन्न जायते पुंसो मोक्षो जन्म शतैरपि ॥३४६॥
न जानाति यदायं स्वमानन्दात्मानमत्यवम् ।
तदा नानाविधं दुःख मेति जन्तुरकारणम् ॥३४७॥
असुखा नाम ये लोका अन्धेन तमसावृताः ।
मृत्वा तानभिगच्छन्ति ये स्वज्ञानविवर्जिताः ॥३४८॥

एवं संसारशूलेऽस्मिन् वर्तन्ते सर्वदेहिनः ।
ब्रह्माद्याः स्तम्बपर्यन्ता आत्मज्ञानविवर्जिता ॥३४९॥

ब्रह्मज्ञानं विना नैव सूक्ष्मो देहो विनश्यति ।
कारणस्य विनाशस्तु ह्यत्यन्तमेव दूरगः ॥३५०॥

कारणे सति सर्वोऽपि संसारानर्थसागरः ।
न नश्यति ततो दुःखमत्यन्तमेव प्राप्यते ॥३५१॥

अधिकारिशरीरेषु ब्रह्मात्मनिश्चयो न चेत् ।
भविता भविता हानिरस्माकं महती किल ॥३५२॥

अत्रैव ब्रह्मविज्ञानं करिष्यामो ध्रुवं वयम् ।
अन्वयव्यतिरेकाभ्यां यन्मुक्तिसाधनं परम् ॥३५३॥

आत्मविज्ञानसम्पन्नो दुस्तरे पुण्यपातके ।
तरत्येष उभे एते हनूमानिव सागरम् ॥३५४॥

ब्रह्मज्ञानं विना यस्या नाशो नास्ति कथञ्चन ।
स्थिता माया परे तस्मिन् स्वात्मावरणकारणम् ॥३५५॥

ब्रह्मज्ञानेन विध्वस्ता स्वात्मावरणरूपिणी ।
विक्षेपजननी माया पुनर्नैव भविष्यति ॥३५६॥

अमृतत्वं हि मोक्षः स्यात्स च देहाद्यभावतः ।
देहादीनामभावस्तु ह्यज्ञानस्य विनाशतः ॥३५७॥

अज्ञानस्य विनाशः स्यादानन्दात्मावबोधतः ।
बोधाभावे कथं नाशमज्ञानं तु गमिष्यति ॥३५८॥

अज्ञानानाशतो नैव देहाद्यभाव इष्यते ।
तत्सम्बन्धेऽमृतत्वस्य नैवाशाऽस्ति कदाचन ॥३५९॥

तमेवमीश्वरं ज्ञात्वा भवन्ति ह्यमृताः खलु ।
आत्मविज्ञानतो नान्यः पन्था मुक्तिपुरं प्रति ॥३६०॥

ये जानन्तीममात्मानं ते भवन्त्यमृताः सदा ।
अन्ये संसारमासाद्य दुःखमेवाभियान्ति च ॥३६१॥

नान्यो हेतुर्जगत्यस्मिन्नीशभावाय विद्यते ।
ब्रह्मज्ञानादतस्तत्तु करणीयं प्रयत्नतः ॥३६२॥

येन ज्ञानेन तं देवमात्मस्थं परमेश्वरम् ।
दृष्टवान् यमाविज्ञाय मुक्तिर्नैव भवेदिह ॥३६३॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमाविज्ञाय दुःखस्यान्तो भविष्यति ॥३६४॥

वियतो वेष्टनं यद्वत् कर्तुमत्र न शक्यते ।
आत्मज्ञानं विना तद्वन्मोक्षः प्राप्तुं न शक्यते ॥३६५॥

आकाशवेष्टनं नैव चर्मवद्भवति क्वचित् ।
विना ब्रह्मात्मविज्ञानं मुक्तिर्न भवति तथा ॥३६६॥

एष एव ततो देवः स्वयंज्योतिरितीरितः ।
आनन्दात्मैव ज्ञातव्यो मोक्षायात्र मुमुक्षुणा ॥३६७॥

आत्मज्ञानं विना ब्रह्म देवानां विदुषामपि ।
कुर्याद्भयं कथं नान्यजन्तूनां कुरुते तु तत् ॥३६८॥

ब्रह्मप्राप्त्यै न मार्गोऽन्यो विद्यते ब्रह्मबोधनात् ।
ब्रह्मबोधं विना मायानाशो नास्ति यतस्ततः ॥३६९॥

यज्ज्ञानान्मुच्यते माया क्लेशकर्माशयात्पुमान् ।
तस्मान्मनः पृथङ् नास्ति जगन्माया च नास्ति हि ॥३७०॥

उत्पन्नं यस्य विज्ञानमहं ब्रह्मेति केवलम् ।
तं प्रत्यदर्शनं याति माया नैवापरान्प्रति ॥३७१॥

अद्वितीयात्मविज्ञानान्नान्यः पन्था विमुक्तये ।
विद्यते नाप्यभून्नैव भविष्यति कदाचन ॥३७२॥

एकं विहाय विज्ञानं ब्रह्मणः स्वात्मरूपतः ।
उपायैर्विविधैस्तत्त्वं नाविर्भवेत्कदाचन ॥३७३॥

अयं मार्गो न चान्योऽस्ति ब्रह्मणो यद्विवेदनम् ।
सम्पाद्यमिदमेवं स्यात्सत्यब्रह्माप्तिहेतुतः ॥३७४॥

विज्ञानं मुक्तिदमस्मात्प्रमादो वर्ज्य एव हि ।
कुर्वन्त्यस्मात्प्रमादं ये संसाराब्धौ पतन्ति ते ॥३७५॥

वेदनं न ह्ययतिक्रम्य गन्तव्यं साधनान्तरम् ।
अस्य येऽतिक्रमं चक्रुः पराभूता हि दुर्धियः ॥३७६॥

संसारसुभटेनैव ते सर्वे विजिताः क्षणात् ।
तेन वशीकृतास्तत्र पुनरायान्ति यान्ति च ॥३७७॥

एवं संसारसुभटो जन्तून् जन्तुकसन्निभान् ।
प्रमादिनो ह्यमून् दीनानात्मज्ञानविवर्जितान् ॥३७८॥

अथ ऊर्ध्वं तथा दिक्षु विदिक्ष्वपि च संक्षिपन् ।
पितृमातृप्रवेशाद्यैस्तुदंस्तैर्विविधायुधैः ॥३७९॥

निपातयति संसारे नानायोनिषु सर्वदा ।
तत्र परिभ्रमन्तस्ते दुःखाद्दुःखं प्रयान्ति हि ॥३८०॥

विना ज्ञानं कथं नाशमज्ञानन्तु गमिष्यति ।
अज्ञानानाशतः केन सूक्ष्मदेहो विनश्यति ॥३८१॥

सूक्ष्मदेहस्य संस्थाने न नश्येत् पुण्यपातकम् ।
पुण्यपातकसंस्थाने स्थूलदेहो विजायते ॥३८२॥

सति स्थूलशरीरेऽस्मिन् सुखदुःखोपभोगवान् ।
न मरिष्यति को नाम शरीरी योऽपि पूर्वजः ॥३८३॥

अमृतत्वास्य नैतस्मादाशा ज्ञानं विना क्वचित् ।
तस्माज्ज्ञानाय सततं यतितव्यं मुमुक्षुभिः ॥३८४॥

मृतो जातः शिशुस्तस्माद्युवा वृद्धः पुनर्मृतः ।
जन्तुर्भ्रमति संसारे यावदात्मावबोधनम् ॥३८५॥

तस्मादेतत्समग्रं हि दुःखं देहादिकं नृणाम् ।
विनाऽऽनन्दात्मविज्ञानं दुःखकारणनाशनम् ॥३८६

अनेनैव शरीरेण न ज्ञात्वा योऽमृतिं व्रजेत् ।
स शोच्यः सर्वभूतानां कौलेयः कृमियुग्यथा ॥३८७

अज्ञो ब्रह्मणि नानेव पश्यन्मृत्युं पुनः पुनः ।
प्राप्नोत्यद्वैतदर्शी तु ह्यमृतं विन्दते ध्रुवम् ॥३८८॥

पूर्वे ह्यपि च विद्वांसो विभिन्नमात्मलोकतः ।
लोकान्तरमपश्यन्तो नेच्छन्त्यन्यत्तु साधनम् ॥३८९॥

आत्मलोकं समिच्छन्तः प्रव्रजेयुः प्रव्राजिनः ।
आत्मलोकस्य सम्प्राप्तिर्ह्यविद्योच्छेदपूर्वकम् ॥३९०॥

स्वात्मनि यदवस्थानं तच्च ज्ञानैकहेतुकम् ।
ज्ञानस्यैव ततः सिद्धा स्फुटा मोक्षस्य हेतुता ॥३९१॥

अज्ञः संसारमाप्नोति त्रिपुटीद्वैतसंज्ञितम् ।
विद्वान् कैवल्यमाप्नोति त्रिपुटीद्वैतवर्जितम् ॥३९२॥

पूर्णानन्दस्वरूपेण ह्यात्मानं योऽवगच्छति ।
मुच्यते भेददर्शी तु बध्यते नात्र संशयः ॥३९३॥

सर्वे जीवाः सुखैर्दुःखैर्मायाजालेन वेष्टिताः ।
तेषां मुक्तिः कथं देव कृपया वद शङ्कर ! ॥३९४॥

सर्वसिद्धिकरं मार्गं मायाजालनिकृन्तनम् ।
जन्ममृत्युजराव्याधिनाशनं सुखदं वद ॥३९५॥

हिरण्यगर्भः पप्रच्छ स होवाच महेश्वरः ।
नानामार्गैस्तु दुष्प्रापं कैवल्यं परमं पदम् ॥३९६॥

सिद्धिमार्गेण ज्ञानेन ब्रह्ममात्रावगाहिना ।
कैवल्यं लभते ब्रह्मन्नान्यथा कोटिजन्मसु ॥३९७॥

तपो द्वादश वर्षाणि ऋभुर्नाम महामुनिः ।
चचार तस्य चान्तेऽसौ वराहरूपधृक् स्वभूः ॥३९८॥

प्रादुरभूत् स होवाच ऋभो वृणीष्व त्वं वरम् ।
वेदशास्त्रं पुराणानि ब्रह्मादयोऽखिलाः सुराः ॥३९९॥
प्राहुरज्ञानजं बन्धं ज्ञानादेव च मुक्तताम् ।
अतः स्वगोचरां ब्रूहि ब्रह्मविद्यां स्वयं प्रभो ॥४००॥
एवं पृष्टः स भगवान् प्राह भक्तार्तिभञ्जनः ।
स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ॥४०१॥
साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ।
नित्यानित्यविवेकश्च इहामुत्रविरागता ॥४०२॥
शमादिषट्कसम्पत्तिर्मुमुक्षा तां समभ्यसेत् ।
एवं जितेन्द्रियो भूत्वा सर्वत्र ममतामतिम् ॥४०३॥
विहाय साक्षिचैतन्य मयि कुर्यादहंमतिम् ।
सच्चित्सुखाद्वयं रूपं वेदान्तश्रवणादिना ॥४०४॥
यो विजानाति स विद्वान् कृतकृत्यो भवेदिह ।
यो न जानाति सोऽविद्वान् कदा मुक्तो भविष्यति ॥४०५॥
प्रज्ञानमेव तद्ब्रह्म सत्यज्ञानादिलक्षणम् ।
एवं ब्रह्मपरिज्ञानादेव मर्त्योऽमृतो भवेत् ॥४०६॥
अहं ब्रह्मेति विज्ञानं मोक्षहेतुर्महात्मनाम् ।
अद्वितीयब्रह्मतत्त्वं न जानन्ति यदातदा ॥४०७॥
भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ।
वराहो भगवानेवं ज्ञानादेवाह मुक्तताम् ॥४०८॥

मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद् ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥४०९॥

अभ्यासाच्च समुत्पन्ने विज्ञाने ब्रह्मगोचरे ।
संसाराब्धिं विबुद्धात्मा स संतरति नेतरः ॥४१०॥

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य धीमतः ।
नैवास्ति किञ्चित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥४११॥

नाहं ब्रह्मेति विभ्रान्त्या सुदृढं बध्यते जनः ।
सर्वं ब्रह्मेति विज्ञानात् सुदृढान् मुच्यते किल ॥॥४१२॥

अहमेव परं ब्रह्म ह्यद्वयानन्दलक्षणम् ।
इति ज्ञानं विना नैव मुक्तिर्भवति कर्हिचित् ॥४१३॥

कृशोऽहं बत बद्धोऽहं हस्तपादादिमानहम् ।
इति भावानुरूपेण व्यवहारेण बध्यते ॥४१४॥

नाहं दुःखी न मे देहो बन्धः कोऽस्त्यात्मनि स्थितः ।
इति विज्ञाय स्वात्मानं मनीषी मुच्यते भृशम् ॥४१५॥

सर्वं ब्रह्मेति यस्यान्तर्भावना सा हि मुक्तिदा ।
भेददृष्टिरविद्येयं सर्वथा तां विसर्जयेत् ॥४१६॥

न कर्मणा न प्रजया न चान्येनापि केनचित् ।
ब्रह्मवेदमात्रेण ब्रह्माप्नोत्येव मानवः ॥४१७॥

अज्ञानमलपङ्कं यः क्षालयेज्ज्ञानतोयतः ।
स एव सर्वदा मुक्तो नान्यः कर्मरतो हि यः ॥४१८॥

मुक्तिकोपनिषद्येवं रघुनाथोऽब्रवीद्यतः ।
ज्ञानान्यं मुक्तिहेतुं हि नाङ्गीकुर्मस्ततोऽपि च ॥४१९॥

यः स्वं परेशञ्च पृथग् हि वेत्ति
संसारचक्रे स हि बंभ्रमीति ॥
यदात्मरूपं परिपश्यतीशं
तेनाथ प्रीतस्त्वमृतत्त्वमेति ॥४२०॥

रूपादिहीनं यदनामयं पर–
मपास्तकार्यश्च निरस्तकारणम् ।
एवं विदुर्ये हि भवन्ति तेऽमृताः
प्रयान्ति दुःखं त्वनिशं तथेतरे ॥४२१॥

तिष्ठन्ति यस्मिन्नखिलाः किलाक्षरे
देवाश्च वेदाः परमे विहायसि ॥
जानन्ति ये तं ह्यमृता भवन्ति ते
वेदैर्भवेत् किं यदि तन्न जानते ॥४२२॥

देवादयोऽप्यसुरभावमुपागताः स्वं
हत्वाथ सन्तमसमत्र हि संसरन्ति ।
हिंसन्ति नैव सुधियस्त्वजरामरं स्वं
ज्ञात्वा परं किल भवन्ति विमुक्तिभाजः ॥४२३॥

प्राणादेरान्तरं तत्त्वं विनिश्चिन्वन्ति येऽद्वयम् ।
अमृतास्तत एवैते जन्मादि परिवर्जिताः ॥४२४॥

अवश्यमेव सम्पाद्यमात्मज्ञानं महात्मभिः ।
दुर्गमं मुक्तिपुर्या यद्राजमार्गसमं स्मृतम् ॥४२५॥
निर्वाणं नाम परमं सुखं प्राप्य पुनर्जनः ।
न जायते न म्रियते तज्ज्ञानादेव लभ्यते ॥४२६॥
संसारोत्तरणे जन्तोरुपायो ज्ञानमेव हि ।
तपो दानं तथा तीर्थमनुपायाः प्रकीर्तिताः ॥४२७॥
यत्प्राप्य न निवर्तन्ते यत्प्राप्य नैव शोचति ।
तत्पदं ज्ञानमात्रेण लभ्यं नैवान्यतः क्वचित् ॥४२८॥
दृश्यं नास्तीतिबोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चेत्तदोत्पन्ना परा निर्वाणनिर्वृतिः ॥४२९॥
अन्यथा शास्त्रगर्तेषु लुठतां भवतामिह ।
भवत्यकृत्रिमाज्ञानां कल्पैरपि न निर्वृतिः ॥४३०॥
रसो ब्रह्मरसं दृष्ट्वाऽऽनन्दी भवति नान्यथा ।
प्राज्ञमेव तपेन्नैषा चिन्ता कर्माग्निसम्भृता ॥४३१॥
पूर्वापरादिनिर्मुक्तं सच्चिदानन्दविग्रहम् ।
तमेव विद्वानत्येति मृत्युं पन्था न चेतरः ॥४३२॥
प्रतिष्ठां विन्दते स्वस्मिन् यदा स्यादथ सोऽभयः ।
कुरुतेऽस्मिन्नन्तरश्चेदथ तस्य भयं भवेत् ॥४३३॥
वायुः सूर्यो वह्निरिन्द्रो मृत्युर्जन्मान्तरेऽन्तरम् ।
कृत्वा धर्मं विजानन्तोऽप्यस्माद् भीत्या चरन्ति हि ॥४३४॥

अज्ञानकार्यसर्पस्य रज्जुविज्ञानमन्तरा ।
निवृत्तिर्दृश्यते नैव स्वकारणे लयं विना ॥४३५॥

अविद्या कार्यवन्धस्य ब्रह्मात्मज्ञानमन्तरा ।
निवृत्तेः सम्भवो नास्ति मूलाज्ञानानिवृत्तितः ॥४३६॥

सत्यं चिदद्वयानन्दं निर्विशेषं परं पदम् ।
साक्षात्कृत्य स्वमात्मानं मूलाज्ञनं निरस्यति ॥४३७॥

आत्वविषयमज्ञानं भवबन्धस्य कारणम् ।
तत्त्वमस्यादिवाक्योत्था मतिः क्षिप्रं विनाशयेत् ॥४३८॥

अद्वितीयं परात्मानं प्राप्तमपि स्वभावतः ।
अप्राप्तमिव लिप्सेत लभते ज्ञानमात्रतः ॥४३९॥

निर्दोषवेदशिरसो वचनादथास्मिन्
ब्रह्मात्मवस्तुनि भवेदपरोक्षबुद्धिः ।
साऽज्ञानमात्र विहतिं सततं करोति
तापत्रयं समुपशाम्यति तस्य नाशात् ॥४४०॥

अनाद्यविद्यापटनेत्रबन्धनं
प्रसह्य वेदान्तनिबन्धनामतिः ।
स्वजन्ममात्रेण दृढाऽऽत्मगोचरा
समूलदाहं दहतीति हि श्रुतिः ॥४४१॥

स्वीयाविद्या कल्पिताचार्यवेद-
न्यायादिभ्यो जायते तस्य विद्या ।

विद्याजन्मध्वस्तमोहस्य तस्य
　स्वीये रूपेऽवास्थितिश्चित्प्रकाशे ॥४४२॥

परमेव तत्त्वमगृहीतमभू-
　दखिलस्य कारणमनर्थकरम् ।
परमेव तत्त्वमवबुद्धमतः
　परिमुक्तये भवति पुष्कलतः ॥४४३॥

परतत्त्वमेव किल बन्धकरं
　यदि तन्न पश्यति बहिर्मुखधीः ।
परतत्त्वमेव खलु मुक्तिकरं
　यदि तत्प्रपश्यति निवर्त्य तमः ॥४४४॥

परबोधमात्रमुपनेयमतः
　परमोहमात्रमपनेयमपि ।
परबोधमोहजनि हानिकरं
　वचनं त्रयीशिरसि तत्त्वमिति ॥४४५॥

ब्रह्मैव संसरति मुच्यत एतदेव
　स्वाज्ञानतः स्वमहिमप्रतिबोधतश्च ॥
आध्यासिकं भवति संसरणं तु तस्य
　मुक्तिः पुनर्भवति चिद्वपुषैव तस्य ॥४४६॥

आत्मैव भाति जगदित्युदितस्तरङ्गै,
　कल्पान्त एक इव वारिधिरप्रमेयः ।

ज्ञातः स एव हि ददाति विमोक्षसिद्धिं
त्वज्ञात एव मनसे चिरबन्धनाय ॥४४७॥

स्थूलसूक्ष्मशरीरे च यत्तादात्म्यमबोधजम् ।
अनर्थस्तन्निवृत्तिस्तु ज्ञानकालैव सम्मता ॥४४८॥

स्वाज्ञानवशतो ब्रह्म प्राप्य स्थावरजङ्गमम् ।
क्वचित्स्वज्ञानतो मुक्तं बद्धमन्यत्र तिष्ठति ॥४४९॥

पक्षौ वैराग्यबोधौ तौ मुक्तिः सौधाग्रस्थालता ।
ताभ्यां विनाऽन्यतो नैव तस्याः स्यादधिरोहणम् ॥४५०॥

ज्ञानं वैराग्यसहितं परं कल्याणकारणम् ।
तस्माद्वैराग्यबोधाभ्यां मुक्तये सहितो भवेत् ॥४५१॥

देहे ह्यात्मधियं कृत्वा क्लेशमाप्नोति दुःसहम् ।
परानन्दात्मनि कृत्वा सर्वक्लेशाद्विमुच्यते ॥४५२॥

नश्यति ब्रह्मज्ञानेन बन्धोऽयं कल्पितो यतः ।
रज्जुज्ञानाद्यथा सर्पो मरुज्ञानाज्जलं यथा॥ ४५३॥

विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः ।
अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥४५४॥

ब्रह्मात्माज्ञानमेवास्य बन्धने कारणं मतम् ।
परात्मैकत्वविज्ञानात् तन्नाशो मुक्तिरिष्यते ॥४५५॥

तस्य देवाधिदेवस्य परस्य परमात्मनः ।
ज्ञानादेव पराप्राप्तिर्नत्वनुष्ठानदुःखतः ॥४५६॥

ज्ञानं साधनसम्पाद्यं तत्प्राप्तावुपयुज्यते ।
यथा चामीकरप्राप्तौ नैवान्यदुपयुज्यते ॥४५७॥

सद्ब्रह्मैवाहमस्मीति संपरिज्ञानमात्रतः ।
जन्तोर्न जायते दुःखं जीवन्मुक्तत्वमेति च ॥४५८॥

सम्परिज्ञातमात्रेण निर्विशेषचिदात्मना ।
पुनर्दोषा न बाधन्ते मरणाद्याः कदाचन ॥४५९॥

बहुकालमियं रूढा मिथ्याज्ञानविषूचिका ।
जगन्नाम्न्यविचाराख्या विना ज्ञानं न नश्यति ॥४६०॥

संसारकारणाज्ञाननाशो यावन्न सम्भवेत् ।
तावद्धि प्राप्तमप्यात्मतत्त्वं पूर्णं न प्राप्यते ॥४६१॥

ज्ञानेनाज्ञाननाशे तु पूर्णरूपेण प्राप्यते ।
यतितव्यमतो ज्ञाने सर्वथैव मुमुक्षुभिः ॥४६२॥

जगदिदं मनोमात्रमज्ञानात् समुपस्थितम् ।
ब्रह्मात्मैकत्वज्ञानेन नश्यत्यज्ञाननाशतः ॥४६३॥

अज्ञानकार्यबन्धोऽयमज्ञदृष्ट्यैव भासते ।
ब्रह्मात्मैक्यविदो दृष्ट्या ह्यात्मनो नित्यमुक्तता ॥४६४॥

अन्धकारो यथा नश्यन्भास्करालोकनात्क्षणात् ।
नश्यत्येवमविद्येयं ब्रह्मात्मनोऽवलोकनात् ॥४६५॥

संसारगिरिपातेषु दुःखकण्टकशालिषु ।
अधोऽधः पातनेनाश्ववलोडयतिदेहिनम् ॥४६६॥

अविद्या यावदस्यास्तु नोत्पन्ना क्षयकारिणी ।
ब्रह्मात्मगोचरा विद्या कैवल्यसुखदायिनी ॥४६७॥

दृष्टे ब्रह्मात्मनि साक्षात्स्वयमेव विनश्यति ।
संसारकारणाविद्या तन्नाशो मोक्ष उच्यते ॥४६८॥

अज्ञानाद्धि जगद्भाति ज्ञानादेव विनश्यति ।
सहाज्ञानेन तत्सर्वं पदमाप्नोति निर्मलम् ॥४६९

तावद् भ्रमन्ति संसारे वारिण्यावर्तका इव ।
यावन्मूढा न पश्यन्ति स्वमात्मानमनिन्दितम् ॥४७०॥

दृष्ट्वात्मानमसत् त्यक्त्वा सत्यमासाद्य चिद्घनम् ।
कैवल्यात्मस्वरूपं यज्जायन्ते नेह ते पुनः ॥४७१॥

हे जना अपरिज्ञात आत्मा वो दुःखसिद्धये ।
परिज्ञातस्त्वनन्ताय सुखायोपशमाय च ॥४७२॥

संप्राप्तं सुदृढं ज्ञानं मोक्षाय भवति किल ।
संसारतरणे नास्ति ज्ञानेतरा गतिः क्वचित् ॥४७३॥

सर्वमात्ममयं विश्वं नास्त्यनात्ममयं क्वचित् ।
प्राप्नोत्यज्ञानतो बन्धं ज्ञानात्कैवल्यमेति हि ॥४७४॥

असम्यक्प्रेक्षणं विद्धि करणं जगतः स्थितौ ।
संसारशान्तये राम करणं सम्यगीक्षणम् ॥४७५॥

इमा घटपटाकाराः पदार्थशतपङ्क्तयः ।
आत्मैव नान्यदस्तीति निश्चयः सम्यगीक्षणम् ॥४७६॥

असम्यग्वेदनाद्रज्जुः सर्पो नो सम्यगीक्षणात् ।
असम्यग्वेदनाज्जन्म मोक्षः सम्यगवेक्षणात् ४७७॥

ज्ञानान्निर्दुःखतामेति ज्ञानादज्ञानसंक्षयः ।
ज्ञानादेव परा मुक्तिर्नान्यस्माद् राम साधनात् ॥४७८॥

ज्ञानवानेव सुखवान् ज्ञानवानेव जीवति ।
ज्ञानवानेव मुक्तोऽसौ तस्माज् ज्ञानपरो भवेत् ॥४७९॥

तावत् स्फुरत्यविद्येयं नानाकारविकारिणी ।
यावन्न सम्परिज्ञातः शुद्धः स्वात्मायमात्मना ॥४८०॥

अज्ञानाज्जीवभावोऽयं संसारस्तस्य तादृशः ।
सच्चिदानन्दब्रह्मात्मसम्यग्ज्ञानाद्विनश्यति ॥४८१॥

तत्त्वज्ञानोपदेशेन समूलानर्थहानतः ।
परमानन्दप्राप्तेश्च विद्वान् कृतकृत्यो भवेत् ॥४८२॥

आत्मज्ञानैकमात्रेण संसृत्याख्या विषूचिका ।
संशाम्यतीति निश्चित्य मुमुक्षुस्तत्परो भवेत् ॥४८३॥

अज्ञानमात्रसंसिद्धं वस्तु ज्ञानेन शाम्यति ।
यथा रज्ज्वां भुजङ्गत्वं मरावम्बुमतिर्यथा ॥४८४॥

अबोधेन जगत्सर्वमिन्द्रजालमिव स्थितम् ।
बोधेन सकलं नाशं प्रयात्येव न संशयः ॥४८५॥

मायेयमति दुष्पारा संसाराकारतां गता ।
बोधेनापक्षयं याति गन्धर्वनगरं यथा ॥४८६॥

मनसो ब्रह्मभावेनावस्थानं मोक्ष उच्यते ।
तत्त्वज्ञानाद्विना सोऽपि कदाचिन्नैव सिद्ध्यति ॥४८७॥
जीवो जगच्च नास्त्येव निखिलं चिन्मयं यतः ।
बुद्ध्वैवं परमार्थं स्वं मुक्तो भवति नान्यथा ॥४८८॥
भवबन्धमयी साधो विषमेयं विषूचिका ।
आत्मज्ञानादृते दीर्घा न कदाचन शाम्यति ॥४८९॥
अविद्यैवमनन्तेयं संसाराकारतां गता ।
आत्मज्ञानादृतेनैव केनचिदपि नश्यति ॥४९०॥
विचारदृष्टिना सर्वं जगदप्यवलोकितम् ।
ज्ञानादृते न संसारबन्धः क्षयमुपैति हि ॥४९१॥
परमानन्दरूपेण ह्यवस्थानमनुत्तमम् ।
सर्वदुःखविहीनं तन्निर्वाणं परमं पदम् ॥४९२॥
अध्यात्मशास्त्रजन्येन ज्ञानोपायेन लभ्यते ।
नह्युपायान्तरेणैव केनचिदपि प्राप्यते ॥४९३॥
स्वात्मतत्त्वापरिज्ञानाज्जीवतेयं समागता ।
तज्ज्ञानाद्विलयं याति रज्जुज्ञानादहिर्यथा ॥४९४॥
तत्त्वाज्ञानेनजातेयं संसारभ्रान्तिरातता ।
तत्त्वज्ञानात् क्षयं याति रज्ज्वामिव भुजङ्गधीः ॥४९५॥
अज्ञानतमसो जातो बन्धः संसारसंज्ञकः ।
विज्ञानभास्करेणाशु समूलं नश्यति ध्रुवम् ॥४९६॥

तत्त्वावलोकनाज्जीवो भवेत्तीर्णभवार्णवः ।
न तीर्यते भवाब्धिर्हि तत्त्वावलोकनं विना ॥४९७॥

तत्त्वावलोकने यत्नः कर्तव्यो मुक्तिमिच्छता ।
सर्वदुःखशिरश्छेदस्तत्त्वालोकेन जायते ॥४९८॥

यावद्देहेन्द्रियप्राणैर्भिन्नत्वं नात्मनो विदुः ।
तावत्संसारदुःखौघैः पीड्यन्ते मृत्युसंयुताः ॥४९९॥

स्वात्मानुभवतः सत्यमानन्दात्मानमद्वयम् ।
ज्ञात्वाऽभिन्नतया सद्यो मुच्यन्ते नात्र संशयः ॥५००॥

गुरूपदिष्टमात्मानं पश्यत्यवे यदा स्फुटम् ।
जीवन्मुक्तस्तदा देही मुच्यते प्राकृतैर्गुणैः ॥५०१॥

यदापरात्मात्मविभेदभेदकं
विज्ञानमात्मन्यवभाति भास्वरम् ।
तदैव माया प्रविलीयतेऽञ्जसा
सकारका कारणमात्मसंसृतेः ॥५०२॥

रज्जुज्ञानाद्यथा सर्पभ्रमो हि विनिवर्तते ।
अद्वयब्रह्मविज्ञानात् तथा माया निवर्तते ॥५०३॥

निष्कामकर्मतः शुद्धचित्तस्य ब्रह्मवेदनम् ।
सञ्जायतेऽथ तेनैव नाशः समूलसंसृतेः ॥५०४॥

उत्पन्नायां तु विद्यायामाविद्यकमनाद्यपि ।
प्रबोधे स्वप्नवत् सर्वं सह मूलं विनश्यति ॥५०५॥

नान्योऽस्ति पन्था भवबन्धमुक्ते-
र्विनात्मतत्त्वावगमं मुमुक्षोः ॥
ब्रह्मात्मविज्ञानमतः प्रयत्नात्
सम्पादनीयं भवमोक्षहेतुः ॥५०६॥

तमस्तमःकार्यमनर्थजातं
न दृश्यते सत्युदिते दिनेशे ।
तथाद्वयानन्दरसानुभूतौ
नैवास्ति बन्धो न च दुःखगन्धः ॥५०७॥

सकार्याज्ञाननाशस्तु सम्यग्ज्ञानेन नान्यथा ।
ब्रह्मात्मैकत्वविज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ॥५०८॥

ब्रह्मात्मानुभवेनैव ब्रह्मनिष्ठो भवेद्यदा ।
समूलदुःखनाशश्च ह्यानन्दाप्तिस्तदा भवेत् ॥५०९॥

ब्रह्मात्मैकत्वबोधोऽग्निरविद्यावनदाहकः ।
पुनः संसारबीजं स्यात् किं कैवल्यमुपेयुषः ॥५१०॥

रज्जुज्ञानाद्यथा सर्पो नश्यति ब्रह्मबोधतः ।
मायेयं नश्यति तद्वच्छुद्धाद्वितीयगोचरात् ॥५११॥

अज्ञानहेतुको बन्धः कल्पितो रज्जुसर्पवत् ।
अन्योपायैर्न छेदोऽस्य ब्रह्मज्ञानासिना विना ॥५१२॥

निष्कामकर्मणा शुद्धबुद्धेर्ब्रह्मात्मवेदनम् ।
समूलसंसृतेरस्या नाशस्तेनैव नान्यथा ॥५१३॥

साक्षात्कृत्य परात्मानं न बिभेति कुतश्चन ।
विना ब्रह्मात्मविज्ञानं नान्यः पन्था विमुक्तये ॥५१४॥
यथा रज्ज्वामहिभ्रान्तिर्नश्यति रज्जुज्ञानतः ।
ब्रह्मज्ञानात् तथा शान्तिमेति संसारविभ्रमः ॥५१५॥
ज्ञायते परमात्मा चेदेषा दुःखस्य सन्ततिः ।
क्षयमेति न सन्देहो रज्जुज्ञानादहिर्यथा ॥५१६॥
आत्माऽपरोक्षरूपेण ज्ञातो भवति मुक्तिदः ।
अज्ञातश्चिरबन्धाय ज्ञातव्योऽतः प्रयत्नतः ॥५१७॥
यथैवाभ्युदिते सूर्ये रात्रिः सम्प्रविलीयते ।
समुत्पन्ने तथा ज्ञाने काप्यविद्या विलीयते ॥५१८॥
खाद्रिद्यूर्वीनदीश्रेण्यो विचित्रोऽयं विपर्ययः ।
उदेत्यज्ञानमात्रेण नश्यति ज्ञानमात्रतः ॥५१९॥
जन्मादिभ्रान्तिदृष्टीनामशेषाणामनारतम् ।
मूलोच्छेदकरं ज्ञानं तत्रातियत्नवान् भवेत् ॥५२०॥
तत्त्वबोधस्य प्राप्त्यैव निबिडदुःखसंकटा ।
संसारपदवी सेयं मूलोच्छेदेन नश्यति ॥५२१॥
अज्ञानादेव दुःखं हि संसाराख्यं प्रजायते ।
विज्ञानात् स्वात्मतत्त्वस्य समूलमेव नश्यति ॥५२२॥
अप्रबोधादिदं दुखं प्रबोधात् प्रविलीयते ।
आत्मनिष्ठो ह्यतस्त्यक्त्वा सर्वमेवावतिष्ठते ॥५२३॥

आत्मनो बन्धनस्थानं संसाराख्यमिमं तरुम् ।
सम्यग्ज्ञानासिना छित्त्वा मुक्तास्तिष्ठाति केवलः ॥५२४॥
यावन्मूढा न पश्यन्ति स्वमात्मानमनिन्दितम् ।
तावद्भ्रमन्ति संसारे ह्यावर्ता वारिणि यथा ॥५२५॥
देवादीनां शरीराणि अज्ञानेनावृतानि हि ।
आत्मानं ये न जानन्ति मृत्वा गच्छन्ति तानि ते ॥५२६॥
आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ॥५२७॥
अतीतः सर्वभावेभ्यः सूक्ष्मात् सूक्ष्मतरोऽस्म्यहम् ।
इतिद्वितीयो मोक्षाय निश्चयो जायते सताम् ॥५२८॥
जगज्जालपदार्थात्मा सर्वमेवाहमद्वयः ।
तृतीयो निश्चयश्चेत्थं मोक्षायैव रघूद्वह ! ॥५२९॥
मायया नटवद्ब्रह्म दृश्याकारं व्यवस्थितम् ।
ज्ञानादस्तमितद्वित्वं भवात्मैव त्वमात्मना ॥५३०॥
ज्ञानेनैवाखिलामाशां विनिकृत्य समन्ततः ।
ज्ञानादेव परा सिद्धिर्नान्यस्माद् राम वस्तुनः ॥५३१॥
एतन्मिथ्या हि दुर्ज्ञानं सम्यग्ज्ञानाद्विनश्यति ।
रज्ज्वामिव भुजङ्गत्वं द्वीन्दुत्वं स्वीक्षितादिव ॥५३२॥
आत्मदृष्टिरदृष्टैषा संसारभ्रमदायिनी ।
दृष्टा सती समग्राणां दुखानां क्षयकारिणी ॥५३३॥

अस्यास्त्वदर्शनं यत्तदविद्येत्युच्यते बुधैः ।
तत्त्वबोधेन सा सर्वा नाशमेति न संशयः ॥५३४॥

यथा रज्ज्वामाहिभीतिर्बोधान् नश्यत्यबोधजा ।
तथा देहादिदुःखादि बोधान् नश्यत्यबोधजम् ॥५३५॥

आत्मनि शरीरादौ यावदेवात्मभावनम् ।
सूर्योद्यालोकदुर्भेदं तावद्धि दारुणं तमः ॥५३६॥

आत्मन्येवात्मभावेन सर्वव्यापिनिरञ्जनम् ।
चिन्मात्रममलोऽस्मीति ज्ञानादित्येन नश्यति ॥५३७॥

आनन्दरूपमात्मानं दुःखास्पृष्टमजानतः ।
शोको भवति मोहश्च नात्मैकत्वं विजानतः ॥५३८॥

अन्वयव्यतिरेकाभ्यामविद्याकार्यनिश्चयात् ।
शोकादेस्तन्निवृत्त्यैव नाश आत्यन्तिकोभवेत् ॥५३९॥

अहंब्रह्मेतिविज्ञानादज्ञाने विलयं गते ।
कर्तृत्वादीनि रूपाणि स्वयं यान्ति लयं ततः ॥५४०॥

गुहायां निहितं साक्षदक्षरं वेद चेन्नरः ।
छित्त्वाऽविद्यामहाग्रन्थिं शिवं गच्छेत्सनातनम् ॥५४१॥

सम्यगालोकनादेव द्वित्वमस्तमियादिदम् ।
निर्विशेषात्मना विद्वान्स्वयमेवावतिष्ठते ॥५४२॥

सम्यक्तत्त्वावबोधे नह्यज्ञाने क्षयमागते ।
गलिते वासनाजाले विशोकं प्राप्यते पदम् ॥५४३॥

विमलमात्मनस्तत्त्वं साक्षादेवानुभूय च ।
अज्ञानाख्यं मलं धूत्वा प्राप्नोति परमं पदम् ॥५४४॥
प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ।
नेति नेति स्वरूपत्वादशरीरो भवत्ययम् ॥५४५॥
य आत्मा सर्वभूतानां येन व्याप्तमिदं जगत् ।
तज्ज्ञानादेव विद्वान् स मृत्युमुखात् प्रमुच्यते ॥५४६॥
अप्रवुद्धस्य वन्धोऽस्ति प्रवुद्धस्य न चास्ति हि ।
ज्ञानेन ज्ञेयमभ्येत्य पुनर्जीवो न जायते ॥५४७॥
संसारसंज्ञकंवृक्षं छित्त्वा ज्ञानासिना किल ।
मुक्तो विहरति प्राज्ञः स्तम्भाद्धि वारणो यथा ॥५४८॥
सर्वेषां साधनानां यत् परं कल्याणसाधनम् ।
ज्ञानं सम्पादनीयं तज्ज्ञानान्मुक्तिर्हि लभ्यते ॥५४९॥
प्रत्यक्षज्ञान उत्पन्ने ह्यात्माऽविद्या विनश्यति ।
तन्नाशान्नाशमायाति दुःखं सर्वमिदं जगत् ॥५५०॥
स्वात्मविज्ञानतः सोऽयं विमुक्तः स्वात्मरूपतः ।
अज्ञानवन्धनाद् भूयो मुच्यते नात्र संशयः ॥५५१॥
ततो वन्धनशून्यत्वाद्विमुक्तः सर्वदैव सः ।
विमुच्यते पुनर्माया नाशादात्मप्रबोधतः ॥५५२॥
आत्मप्रबोधतो यस्माद्धन्त्यविद्यामयं पुमान् ।
तस्माद्धंस इति प्रोक्तः पण्डितैर्वेदवादिभिः ॥३॥

आस्तिको ब्रह्मणः सत्तां दृढां ज्ञात्वा गुरोर्मुखात् ।
सम्पादयति तज्ज्ञानं यतोऽविद्या विनश्यति ॥५५४॥
अविद्यायां विनष्टायां ततस्तिष्ठति सर्वदा ।
आनन्दात्मस्वरूपेण मायादुःखविवर्जितः ॥५५५॥

प्राप्तिरत्र प्रकाशः स्यादविद्यायाः क्षये सति ।
अविद्यायाः क्षयो नित्यं विद्यया ब्रह्मजातया ॥५५६॥
विवेकवन्हिना दग्धे कामक्रोधे समूलके ।
संसारे भगवानेष आनन्दात्मा प्रसीदति ॥५५७॥
अज्ञानप्रमुखान् पाशान् कामक्रोधादिकीलकान् ।
सपुरान्ब्रह्मविज्ञानतुण्डेनैनान् व्यनाशयेत् ॥५५८॥
नेत्रैर्विलोक्यमानेऽस्मिन्नुदिते रविमण्डले ।
तमो न दृश्यते यद्वत्तद्वन्मायात्मवीक्षणात् ॥५५९॥

विद्वान् सत्यात्मबोधेन मायापाशविवर्जितः ।
प्राणानां विलयाद्भूयः शरीरं नाप्नुयात् सदा ॥५६०॥
ब्रह्मविज्ञाननष्टं सदज्ञानं नैव जायते ।
आत्मनैवात्मविज्ञानादात्मानं प्रतिपद्यते ॥५६१॥
परात्मैकत्वज्ञानेन ह्यविद्यायाः विनाशतः ।
ब्रह्मगत्वा पुनर्नैव केचिदायान्ति कर्हिचित् ॥५६२॥
सकारणो यथा सर्पो रज्ज्वामेव विलीयते ।
रज्जुज्ञानात्तथा विश्वं मूढैः सत्यतया मतम् ॥५६३॥

भावाभावस्वरूपं यत्कारणाज्ञानसंयुतम् ।
आत्मबोधादिदं सर्वमात्मन्येव विलीयते ॥५६४॥

ब्रह्मज्ञानाग्निना दग्धे स्वात्माज्ञाने तदैवहि ।
विमुक्तो जायमानेषु भूतेषु नैव जायते ॥५६५॥

महाराजो यथा स्वप्ने निर्भयो भयमागतः ।
पश्यत्यकारणं दुःखं प्रतिबुद्धो न पश्यति ॥५६६॥

आत्माज्ञानात्तथा दुःखमानन्दात्मात्र मन्यते ।
आत्माज्ञानात्पुनः स्वस्मिन् दुःखं मिथ्येति मन्यते ॥५६७॥

विज्ञातात्मस्वरूपस्य तमो यस्मान्निवर्तते ।
तन्निवृत्तौ निवर्तेत देहतादात्म्यधीरपि ॥५६८॥

तादात्म्यबुद्ध्यभावे तद्देहतापः कथं भवेत् ।
सदानन्दस्वरूपस्य पुंसो देहात्परस्य हि ॥५६९॥

ब्रह्मविज्ञानतो नैनं दुःखमण्वपि गच्छति ।
शरीरद्वयसञ्जातमविद्या बीजमेव तत् ॥५७०॥

अमृतत्वं हि मोक्षः स्यात् स च देहाद्यभावतः ।
देहादीनामभावश्च ह्यज्ञानस्य विनाशतः ॥५७१॥

अज्ञानस्य विनाशः स्यादानन्दात्मावबोधतः ।
तस्मादात्मावबोधोऽयं सम्पाद्यो मुक्तिमिच्छता ॥५७२॥

सर्वं ब्रह्मेति विज्ञाने ह्यविद्यानाशमागता ।
कारणाभावतस्तस्मान्न देहाः स्थिरजङ्गमाः ॥५७३॥

ज्ञानकर्मेन्द्रियाण्यत्र नैव स्युर्विषयैः सह ।
सुखदुःखादिभिः सार्धं नैवान्तःकरणं क्वचित् ॥५७४॥
सर्वात्मभावरूपोयं ब्रह्मलोकः सम्राडिति ।
त्वमेनं प्रापितोसीति याज्ञवल्क्य उवाच ह ॥५७५॥
विनाश्याशेषमज्ञानं सर्वानर्थस्य कारणम् ।
परमं पुरुषं दिव्यं विद्वान् प्राप्नोति नो चिरात् ॥५७६॥
ब्रह्मास्मीति परात्मानं ज्ञात्वाऽविद्याद्यभावतः ।
सर्वेषां दुःखहेतूनां नाशाद् दुःखं विनश्यति ॥५७७॥
आनन्दात्मनि विज्ञाते सत्ये प्रियतमे पुमान् ।
अविद्यारहितो भूयो मरणं नैव गच्छति ॥५७८॥
जीवत्वस्य परित्यागादेष मायाकृतस्य हि ।
ईशमात्मानमाज्ञाय मुच्यते सर्वपाशतः ॥५७९॥
एवं विज्ञाय जीवोऽयमानन्दात्मानमीश्वरम् ।
कामक्रोधादिकान् पाशान् सन्त्यजेन्मायया सह ॥५८०॥
अधिकारदशां प्राप्तो ह्यविद्यां दुखकारिणीम् ।
विनाशयति भेदस्य जननीमात्मबोधतः ॥५८१॥
हिनस्त्यविद्यामखिलामात्मनो ब्रह्मबोधतः ।
तत एव शरीरस्थो जीवो हंसः प्रकीर्तितः ॥५८२॥
ब्रह्मज्ञानात् स्वयंज्योतिर्यदात्मा ह्यवभासते ।
अविद्यानाशतस्तज्जाः पाशा नाशं प्रयान्ति हि ॥५८३॥
अविद्योपरमे ज्ञानादिदं दुःखमनेकधा ।
न पश्यति पुमान् मुक्तावानन्दात्मा स्वयंप्रभः ॥५८४॥

देहादिषु स्वतामानो बन्धोऽविद्यैकहेतुकः ।
तस्य निवर्तिका या स्यात् सा विद्या परिकीर्तिता ॥५८५॥
प्रज्ञास्वरूपं ब्रह्मैतज्ज्ञातमात्मतया यदा ।
सदाऽविद्यां परित्यज्य याति ब्रह्मात्मतां पुमान् ॥५८६॥
संसारजनकेऽज्ञाने दग्धे ज्ञानाग्निना भृशम् ।
निर्विशेषं परं ब्रह्म नित्यमुक्तमवाप्यते ॥५८७॥
आत्मा नित्यः सदा मुक्तः सुखरूपः स्वयंप्रभः ।
बद्धो ह्यज्ञानतो भाति ज्ञानान्मुक्तो विभात्ययम् ॥५८८॥
यदाऽज्ञानमिदं नाशं व्रजेदात्मावबोधतः ।
अवस्थात्रयनिर्मुक्तं तदा गच्छेत्परं पदम् ॥५८९॥
अहं ब्रह्मेति विज्ञानं विद्या प्रोक्ता मनीषिभिः ।
विरुद्धा याऽनया सेयमविद्या दुःखकारिणी ॥५९०॥
आनन्दात्मस्वरूपस्य निर्दुःखस्य महात्मनः ।
अविद्ययैव दुखं तज्जायते न तु विद्यया ॥५९१॥
ब्रह्मज्ञानाग्निना दग्धे मिथ्याज्ञाने समूलके ।
स्थूलं सूक्ष्मं तथा देहं विद्वान्नैवाभिमन्यते ॥५९२॥
शास्त्रेण नश्येत्परमार्थदृष्टिः
कार्यक्षमं नश्यति चापरोक्षात् ।
प्रारब्धनाशात्प्रातिभाननाश
एवं त्रिधा नश्यति चात्ममाया ॥५९३॥
अज्ञानप्रभवं विश्वं ज्ञानेनाज्ञाननाशतः ।
तत्कार्ये जगति पश्चात्पुनः सत्यत्वधीः कुतः ॥५९४॥

अज्ञानमेव न कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथातिदूरे ।
एकान्तकेवलचिदेकरसस्वभावो
ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥५९५॥

एवमनुभवन् प्राज्ञो विज्ञानादेव मुक्तताम् ।
निर्विशेषात्मरूपां तां ब्रह्मानन्दैकविग्रहाम् ॥५९६॥

अहं ब्रह्मेति विज्ञानादविद्याकञ्चुकक्षये ।
पुण्यपापे उभे तीर्त्वा वर्तन्ते परमे पदे ॥५९७॥

अविद्यया ह्ययमात्मा जीवत्वं प्रतिपद्यते ।
संसारे भ्रमति नित्यं जाग्रदादिस्वरूपके ॥५९८॥

आनन्दात्मानमद्वैतं स्वयंज्योतिःस्वरूपकम् ।
विजानन्तन्निवृत्तौ तु ब्रह्मरूपः प्रजायते ॥५९९॥

नाहं मांसं न चास्थीनि देहादन्यः परोऽस्म्यहम् ।
इति निश्चयवानन्तःक्षीणाविद्यो विमुच्यते ॥६००॥

सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः ।
विदुषो ब्रह्मरूपत्वाद् ब्रह्मणः कुत उद्भवः ॥६०१॥

गुहायां निहितं साक्षादक्षरं वेद चेन्नरः ।
छित्त्वाऽविद्यामहाग्रन्थिं शिवं गच्छेत्सनातनम् ॥६०२॥

विभेदजनकेऽज्ञाने नष्टे ज्ञानबलात्किल ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥६०३॥

अतो ब्रह्मात्मनैवायं विद्वांस्तिष्ठति सर्वदा ।
भेदस्य कारणाभावाच्च्यवते न कदापि हि ॥६०४॥

आत्मा नित्यः सदा शुद्धः सुखरूपः स्वयंप्रभः ।
अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो भवत्ययम् ॥६०५॥

आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः ।
अज्ञाने परितः क्षीणे रागादीनां परिक्षयः ॥६०६॥

रागाद्यसम्भवे नित्यं पुण्यपापविसर्जनम् ।
तयोर्नाशे शरीरेण न पुनः सम्प्रयुज्यते ॥६०७॥

बीजञ्च कार्यमपि वस्तु यदस्ति किञ्चि-
दात्मैव सिद्ध इह पश्यत एकरूपम् ॥
संसारदावदहनस्य सकारणस्य
छेदो भवेत् खलु तदा नियतोऽथ तस्य ॥६०८॥

ब्रह्मात्मत्वेन विज्ञाय ह्यशेषाज्ञाननाशतः ।
नैव स्थास्यति संसारो मोहस्यावसरः कुतः ॥६०९॥

मायातत्कार्यमखिलं बाधित्वा तत्त्वज्ञानतः ।
सर्वदुःखविनिर्मुक्तो विद्वानमृतमश्नुते ॥६१०॥

अमलमात्मनस्तत्त्वं दृष्ट्वाऽज्ञानं निवर्त्य च ।
सम्प्राप्नोत्यचिरादेव तद्विष्णोः परमं पदम् ॥६११॥

साक्षात्कारेण ह्यज्ञानावरणस्य विनाशतः ।
स्वप्रकाशात्मरूपं यन्निर्वाणं तदवाप्नुयात् ॥६१२॥

विद्यायाः समुदयेन ह्यविद्या क्षयमागता ।
यस्य संसक्तिहीनस्य स मुक्तस्तिष्ठति किल ॥६१३॥

सम्यक्तात्त्वावबोधेन ह्यज्ञाने क्षयमागते ।
गलिते वासनाजाले विशोकं प्राप्यते पदम् ॥६१४॥
ऐक्यज्ञानं यदोत्पन्नं महावाक्येन स्वात्मनि ।
तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥६१५॥

अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो !
भवापवर्गं तव योगीभावितम् ॥
यथाञ्जसाऽज्ञानमपारवारिधिं ।
सुखं तरिष्यामि तथाऽनुशाधि माम् ॥६१६॥

श्रुत्वाऽथ सौमित्रिवचोऽखिलं तदा
प्राह प्रपन्नार्तिहरः प्रसन्नधीः ॥
विज्ञानमज्ञानतमोपशान्तये
श्रुति प्रपन्नं क्षितिपाल भूषणः ॥६१७॥

कदाचिदात्मा न मृतो न जायते
न क्षीयते नापि विवर्धते ऽव्ययः ॥
निरस्तसर्वातिशयः सुखात्मकः
स्वयं प्रभः सर्वगतोऽयमद्वयः ॥६१८॥

एवंविधे ज्ञानमये सुखात्मके
कथं भवो दुःखमयः प्रतीयते ॥
अज्ञानतोऽध्यासवशात्प्रकाशते
ज्ञाने विलीयेत विरोधतः क्षणात् ॥६१९॥

गुरोः सकाशादपि वेद वाक्यतः
सञ्जात विद्यानुभवो निरीक्ष्यतम् ।
हन्यादविद्यामचिरेण कारकैः
रसायनं यद्वदुपासितं रुजः ॥६२०॥

अद्वयब्रह्मविज्ञानान्माया नश्यत्यसंशयम् ।
एकरुपः प्रशान्तात्मा साक्षात्स्वात्मसुखो भवेत् ॥६२१॥

साक्षिणं हृदयस्थं हि त्रिपुटीद्वैतवर्जितम् ।
सम्पश्यँस्तेन बोधेनाविद्यायाः स्याद्विघातकः ॥७२२॥

अहं ब्रह्मेति बोधेन नावा सुदृढया पुमान् ।
मायानदीसमुत्थानि स्रोतांस्येतानिसर्वथा ॥६२३॥

संसारभयकारीणि पुंसः संसक्त चेतसः ।
इन्द्रियाणि मनोरज्ज्वा बद्धान्यपि ततस्ततः ॥६२४॥

गतिमन्त्यातिदुःखाय सकारणानि सन्तरेत्
ब्रह्मज्ञानं विनाऽज्ञानं नान्तं याति कुतोऽपि हि ।
ब्रह्मज्ञानाय सततं यतितव्यं मनीषिभिः ॥६२५॥

एतावदेव कर्तव्यं पुरुषेण मुमुक्षुणा ।
नातः परं परं कुर्वन् पतत्येव न संशयः ॥६२६॥

आनन्दरूपमात्मानं स्वयंज्योतिषमद्वयम् ।
अपश्यन् दुःखमनिशं याति पश्यँस्तु मुच्यते ॥६२७॥

मिथ्याभूता ह्यविद्याया बन्धनस्य तु कारणम् ।
न विनश्यति सा चात्मविज्ञानं परिहाय हि ॥६२८॥
आनन्दात्मनि देवेशे सर्वभेदविवर्जिते ।
मायैषा श्रुतिविज्ञानाद्धिनश्यति न चान्यथा ॥६२९॥
ब्रह्मबोधं विना ह्यन्तहीना तस्याश्च नाशने ।
उपायस्त्वेक एवायं ब्रह्मबोधो न चापरः ॥६३०॥
अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ।
भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥६३१॥
सर्वासामपि विद्यानामग्र्यं ज्ञानं परं स्मृतम् ।
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा ॥६३२॥
सम्यग्दर्शनसम्पन्नः कर्मभिर्न वध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यतेः ॥६३३॥
अज्ञानपाशबद्धत्वादमुक्तः पुरुषः स्मृतः ।
ज्ञानात्तस्य निवृत्तिः स्यात्प्रकाशात्तमसो यथा ॥६३४॥
तस्मात्ज्ञानेन मुक्तिः स्यादज्ञानस्य परिक्षयात् ।
आत्मज्ञानं परं तस्मात् प्राप्यते ह्यमृतं यतः ॥६३५॥
यं ज्ञात्वा मुच्यते जन्तुरमृतत्त्वं च गच्छति ।
तं विज्ञायैव स विद्वान्मृत्युमुखात्प्रमुच्यते ॥६३६॥
तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सहकार्येण नासीदस्ति भविष्यति ॥६३७॥

अपरोक्षात्मविज्ञानं शास्त्राचार्यप्रसादजम् ।
संसारकारणाज्ञानतमसश्चण्डभास्करः ॥६३८॥
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ।
एतमेव तपेन्नैषा चिन्ता कर्माग्निसम्भवाः ॥६३९॥

जानाति यस्तं विभुमद्वितीयं
स्वयम्प्रकाशं तमसः परस्तात् ।
ज्ञात्वा परात्मानमत्येति मृत्युं
पन्थाः किलान्योह्यमृताय नास्ति ॥६४०॥

कार्यकारणनिर्मुक्तं ब्रह्मारूपमनामयम् ।
तज्ज्ञानाद्यान्त्यमृतं ते दुःखं गच्छन्त्यथेतरे ॥६४१॥

आत्मविज्ञानतो धीराः न शोकं यान्ति कर्हिचित् ।
तस्य चाज्ञानतो ह्यन्ये शोचन्तीह सदैव हि ॥६४२॥

शोकोऽज्ञानसमुत्थोऽयमज्ञानं स्वात्मबोधनात् ।
विनष्टं केन शोकः स्यादहेतुर्विदुषोऽस्य स ॥६४३॥

यदि तन्न पश्यति हरेः परमं
पदमम्बुशीतलमिवेद्धशिराः ।
न किल प्रदीप्तशिरसोऽस्ति सुखं
खलु दुःखपावकशिखाभिरहो ! ॥६४४॥

विद्यते न तमसो निवृत्तितः
किञ्चिदपि परमात्मधीफलम् ॥

अन्यदल्पमपि साधनान्तरं
न व्यपेक्ष्य फलदायिनी च सा ॥६४५॥

ब्रह्मविज्ञाननष्टं सदज्ञानं नैव जायते ।
आत्मनैवात्मविज्ञानादात्मानं प्रतिपद्यते ॥६४६॥

अज्ञानं संसृतेर्मूलं तन्नाशो ज्ञानहेतुकः ।
तस्मान्निःश्रेयसार्थाय ज्ञानं सम्पादयेद्बुधः ॥६४७॥

ब्रह्मैवात्माहमस्मीति विद्यैषा श्रुतिसम्मता ।
समूलं संसृतेरस्या ह्यत्यन्तं विनिवर्तिका ॥६४८॥

एतावत्खल्वमृतत्वमित्यमृतत्वसाधनम् ।
आत्मविज्ञानमेवेति ह्यवधारयति श्रुतिः ॥६४९॥

प्राप्तप्राप्त्यात्मको मोक्षो ह्यज्ञाननिवृत्त्यात्मकः ।
तस्य च ज्ञानहेतुत्वाज्ज्ञानान्नान्यदपेक्षते । ६५०॥

भिन्नदृष्टिस्त्वविद्या स्यात्तन्नाशो मोक्ष उच्यते ।
ज्ञानेनैव च सोऽपि स्याद्विरोधान्नान्यसाधनैः ॥६५१॥

आत्माऽभिन्नतयां ब्रह्म जाानति यः स मुच्यते ।
शोच्याश्च तेऽन्यथैवातो विदुर्ब्रह्म परं हि ये ॥६५२॥

प्रकाशमानं सततं समं विभुं
द्वयाद्विहीनं सदसद्विकल्पितात् ।
निरीक्ष्य युक्त्या श्रुतितश्च बुद्धिमान्
समूलबन्धस्य निवृत्तिमाप्नुयात् ॥६५३॥

अवेद्यमेकं यदभिन्नवेदिनां
तदेव वेद्यं खलु भिन्नवेदिनाम् ॥
निरीक्ष्य चेत्थं त्वभिमानवर्जितो
न याति मोहं तमसो निवृत्तितः ॥६५४॥
ज्ञानं विना नो भ्रमनाश इष्यते
विमोह बुद्धेर्भ्रम एव कारणम् ॥
अज्ञाननाशाच्च निरिन्धनाग्निवद्
भ्रमः प्रशान्तिं परमां सदा व्रजेत् ॥६५५॥

धर्माधर्मात्मकं कर्म संसारफलकं हि यत् ।
दुस्तराब्धिसमं ज्ञानपोतेनैवातिक्रामति ॥६५६॥
काष्ठानि प्रज्वलतोऽग्निर्भस्मीभावं नयेद्यथा ।
ज्ञानाग्नि सर्वकर्माणि निर्बीजानि करोति हि ॥६५७॥
अतो ज्ञानसमं नास्ति निःश्रेयसस्य कारणम् ।
तस्मात्सर्वप्रयत्नेन ज्ञानं सम्पादयेन्नरः ॥६५८॥
सर्वत्र ब्रह्मदृष्ट्यैव रागद्वेषादिहानतः ।
परमानन्दस्फूर्त्यैव जीवन्मुक्ताश्चरन्ति हि ॥६५९॥
मोक्षस्य साधनं ज्ञानमप्राप्य किल नास्तिकाः ।
मृत्युव्याप्ते तु संसारमार्गे परिभ्रमन्ति हि ॥६६०॥
बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा ।
ज्ञानदग्धैस्तथाक्लेशैर्नात्मा संयुज्यते पुनः ॥६६१॥

विषयेषु विरक्तः सन्नुपशान्तिमुपागतः ।
ब्रह्मात्मानुभवादेव ह्यनन्तं सुखमश्नुते ॥६६२॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामज्ञानजोऽनर्थो नश्यत्यज्ञाननाशतः ॥६६३॥
विरक्ता गतसन्देहा विपर्ययविवर्जिताः ।
मुक्तिं गच्छन्ति तत्त्वज्ञा ज्ञाननाशिततमस्काः ॥६६४॥

नानाविधैश्चापि हि साधनैश्च ।
सहस्रशः सम्यगनुष्ठितैश्च ॥
आत्मैक्यबोधेन विना हि मुक्ति-
र्न लभ्यते कल्पशतान्तरेऽपि ॥६६५॥

अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना ।
नास्त्युपायान्तरं किञ्चिन्मृग्यमाणमपि क्वचित् ॥६६६॥
अकृत्वा दृश्यविलयमज्ञात्वा तत्त्वमात्मनः ।
न ह्युपायान्तरैर्मुक्तिरज्ञानाशीविषे सति ॥६६७॥
अज्ञातेश्वरभावश्च भोक्ताहमिति मन्यते ।
ज्ञात्वा स्वमीश्वरं देवं सर्वपाशैः प्रमुच्यते ॥६६८॥
अज्ञानादेव संसारो ज्ञानादेव विमुच्यते ।
योगतत्त्वः श्रुतिः प्राह ज्ञानादेव विमुक्तताम् ॥६६९॥
ज्ञानस्यैव फलरूपा जीवन्मुक्तिरुदाहृता ।
असंसक्त्यादिनामकभूमिका त्रितयात्मिका ॥६७०॥

जीवन्मुक्तिर्भवेदाद्या ह्यन्या विदेहसंज्ञिता ।
इतिमुक्तिद्वयं ज्ञानादेव वेदान्तसम्मतम् ॥६७१॥

सेतुर्भवाब्धेस्तरणाय दर्शनं
तमेकमात्मानमतो विजानथ ॥
यस्मिञ्जगत्सर्वमिदं समर्पितं
विमुञ्चथान्यानि वचांसिकोविदाः ॥६७२॥

तृष्णाऽनात्मविभावनाहतहृदो गृह्णन्ति ये सञ्चयान् ।
तेऽविद्यादिकलापपाशविवशा गच्छन्त्यनर्थं वहु ॥
तस्माद्दोषविदो भवन्ति विमुखाः सांसारिकाङ्गस्तुनः
विज्ञायाशु विनाशिषु ध्रुवपदं गच्छन्ति ते बुधा ॥६७३॥

ब्रह्मापि सन् स्वतोजीवः स्वभिन्नानात्मवस्तुनि ।
अहं ममाभिमानेन संसारमधिगच्छति ॥६७४॥

पुण्यपुञ्जपरिपाकात्प्रत्यग् ब्रह्मात्मबोधतः ।
समूल संसृतेर्नाशे मुक्तरूपोऽवतिष्ठते ॥६७५॥

तत्त्वरूपतया ज्ञात आनन्दात्माऽत्रमुक्तिदः ।
अज्ञातः स्वयमेव स्यात् स्वस्य वन्धनकारणम् ॥६७६॥

ब्रह्मज्ञानं विनाऽज्ञानं नान्तं याति कुतोऽपि हि ।
अज्ञानकृतवन्धाद्धि मुक्तिर्ज्ञानं विना कुतः ॥६७७॥

ब्रह्मविद् भद्रजात्युत्थः कश्चिदेव करीत्विह ।
उन्मूलयेदविद्यां तां दृढेयं गीयते ततः ॥६७८॥

संसारशूलमूलस्य नाशनंज्ञानमीरितम् ।
मुमुक्षूणामवश्यं हि सम्पाद्यमतियत्नतः ॥६७९॥
गगनेऽत्र यथा ज्ञाते गन्धर्वनगरं लयम् ।
व्रजेदात्मनि विज्ञाते तथामायादिकं लयम् ॥६८०॥
गगनज्ञानतो यद्वद् गगनाज्ञानसंक्षयः ।
आत्मज्ञानात् तथैवात्माऽज्ञाननाशोऽपि निश्चितः ॥६८१॥
निर्विशेषात्मविज्ञानं सर्ववेदान्तसम्मतम् ।
संसारशूलमूलानां मायादीनां विनाशनम् ॥६८२॥
ज्ञानादेव तु कैवल्यं प्राप्यते नान्यसाधनात् ।
केवलस्यात्मनो भावः कैवल्यमिति प्रोच्यते ॥६८३॥
देहादिरहितत्वं तदज्ञानाद्धि सदेहता ।
कल्पिताऽतो विना ज्ञानं न कदाचिन्निवर्तते ॥६८४॥
एतावदेवाऽविद्यात्वं नेदं ब्रह्मेति निश्चयः ।
एष एव क्षयस्तस्या ब्रह्मेदमिति निश्चयः ॥६८५॥
श्रुत्युत्पन्नमहं ब्रह्मेति ज्ञानं बाधवर्जितम् ।
तस्माच्च नियमेनैव मोक्षहेतुर्महात्मनाम् ॥६८६॥
सर्वात्मानं सदानन्दं सर्वाधारं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥६८७॥
इच्छा द्वेषो भयं मोहः क्षुत्तृण्निद्रा तथैव च ।
विण्मूत्रबाधा चेत्येतद् भवेद्दोषाष्टकं हि तत् ॥६८८॥

इति दोषाष्टकं सर्वैरचिकित्स्यं हि देहिभिः ।
विना ब्रह्मात्मताज्ञानं देहित्वाभावकारणम् ॥६८९॥

कृत्वा सुकर्म दुरितान्यपहाय दूरं
शुद्धिं गताः शमदमादिपरा महान्तः ।
मुक्तिं गताः सुखघनस्य विबोधतो वै
नैवान्यथा श्रुतिशिरोभिरपोदितत्वात् ॥६९०॥

यस्मात्परात्मा प्रकृतेः परस्तात्
ज्ञेयोऽस्ति मोक्षाय मुमुक्षुभिश्च ।
तस्माद्विनेयाः परित्यज्य सर्वं
विद्यां परामाश्रयतात्ममुक्त्यै ॥६९१॥

निर्विशेषाद्वयानन्दब्रह्मात्मैकत्वगोचरात् ।
सम्यग्ज्ञानाद्विनिवृत्ततमसां ज्ञानिनां सदा ॥६९२॥

सततं सिद्धनिर्वाणपराणां वीतरागिणाम् ।
अनावृत्तिर्हि सिद्धैव नास्ति शङ्का कदापि च ॥६९३॥

सगुणोपासकानान्तु ब्रह्मलोकनिवासिनाम्
आवृत्तेर्जायते शङ्का शब्दतस्तन्निवृत्तये ॥६९४॥

ब्रह्मलोकावसाने हि तत्रैवोत्पन्नदर्शनाः ।
सहैव तदध्यक्षेण गच्छन्ति परमं पदम् ॥६९५॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते सति सञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥६९६॥

इत्यादि वचनै स्पष्टमाश्रित्य सम्यग्दर्शनम् ।
तद्बलादेव विद्वद्भिरनावृत्तिश्च साधिता ॥६९७॥
एतावदर एवैतदमृतत्त्वस्य साधनम् ।
प्रत्यग् याथात्म्यविज्ञानं नान्यत्किञ्चिदपेक्षते ॥६९८॥
ब्रह्मात्मज्ञानमेवेत्थममृतत्त्वस्य साधनम् ।
मैत्रेय्यै किल भार्यायै याज्ञवल्क्य उवाच ह ॥६९९॥
वेदान्तविहितादात्मविज्ञानादेव केवलात् ।
पुरुषार्थस्य सिद्धिं हि मन्यते बादरायणः ॥७००॥
श्रौतादात्मैक्यविज्ञानान्नैवान्यन्मुक्तिसाधनम् ।
भाष्यकारादिभिरुक्तमत्युद्घोषपुरस्सरम् ॥७०१॥
ब्रह्म सनातनं ज्ञात्वा मृत्युमत्येति तत्त्ववित् ।
ब्रह्मज्ञानं विहायास्ति नान्यः पन्था विमुक्तये ॥७०२॥
त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद् भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥७०३॥
इति श्रुतिगिराऽऽत्मायं नित्यकल्याणरूपतः ॥
बन्धभ्रान्तिविनाशाय नान्यज्ज्ञानादपेक्षते ॥७०४॥

एको मनीषी सकलस्य वेत्ता
ह्यात्मानमेकं बहुधा करोति ।
पश्यन्ति ये तं मतिसंस्थितं ज्ञाः
कैवल्यभाजःखलु नेतरे स्युः ॥७०५॥

स्वाज्ञानप्रभवो बन्धः स्वाज्ञानात्तु निवर्तते ।
अयमव्याहतः पन्था मोक्षायान्यो न विद्यते ॥७०६॥
यतो वाचो निवर्तन्ते ह्यप्राप्य मनसा सह ।
ज्ञानान्यसाधनागम्यं ज्ञानगम्यं हि केवलम् ॥७०७॥
एकमेवाद्वितीयं यत्सच्चिदानन्दमद्वयम् ।
सुसूक्ष्मं निष्क्रियं यच्च प्रशान्तं च निरञ्जनम् ॥७०८॥
आकाशवत्सर्वगतममूर्तैकरसं शिवम् ।
निर्विशेषं निरालम्बं सर्वाधारं निरामयम् ॥७०९॥
विज्ञायैव हि मेधावी मृत्युमुखात्प्रमुच्यते ।
विद्यते ज्ञानमुत्सृज्य नान्यः पन्था विमुक्तये ॥७१०॥
परात्मानं विदित्वायममृतो भवति त्विह ।
नैवज्ञानं विहायान्यः पन्थामोक्षाय विद्यते ॥७११॥
अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ।
यो न जानाति सोऽविद्वान् कदामुक्तो भविष्यति ॥७१२॥
स्वस्वरूपपरिज्ञानं सर्वेषां मुक्तिसाधनम् ।
गीतायां पञ्चमेऽध्याये विस्पष्टं हरिणेरितम् ॥७१३॥
स्थितप्रज्ञगुणातीत लक्षणोक्त्यापि केशवः ।
ज्ञानस्यै व फलरूपां जीवनमुक्तिमुवाच ह ॥७१४॥
एकात्मगोचरायास्तु बुद्धेर्नाशाद्वदन् किल ।
पुरुषार्थंहिताभावं ज्ञानादेवाह मुक्तताम् ॥७१५॥

धर्मस्यास्यात्मज्ञानस्याश्रद्दधानाः परन्तप ? ॥
अप्राप्य मां भ्रमन्तीह मृत्युसंसारवर्त्मनि ॥७१६॥
सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम् ।
ज्ञानादेवामृतं गीताशास्त्रस्योक्तं प्रयोजनम् ॥७१७॥
ज्ञानादेव तु कैवल्यमित्याद्याः श्रुतयः किल ।
ज्ञानादेवामृतमाहुरन्यानिषेधपूर्वकम् ॥७१८॥

ज्ञात्वा देवं सर्वपाशापहानि–
नान्यः पन्था इत्यनन्ताः श्रुतिभ्यः
ज्ञानान्मोक्षो नान्यतो व्यर्थजल्पैः
कर्तुं शक्यो नान्यथा कोटिकल्पैः ॥७१९॥

सर्वोपनिषदां ज्ञानमेव कैवल्यसाधनम् ।
मतं ध्वस्त प्रतिबन्धं साक्षात्कारात्मकं हि यत् ॥७२०॥
उपनिषच्छब्दार्थो हि ब्रह्मविद्या प्रकीर्तितः ।
तत्प्रतिपादकसर्वोपनिषदां मुक्तिः फलम् ॥७२१॥
सहेतोः संसृतेरस्याः शिथिलीकरणादियम् ।
अत्यन्तध्वंसकत्वाद्वा ह्युपनिषद्भिरोच्यते ॥७२२॥
गमयति परं ब्रह्म श्रेय आत्यन्तिकं यतः ।
तस्माद्वोपनिषज्ज्ञेया ब्रह्मविद्या मनीषिभिः ॥७२३॥

शुद्धिद्वारा कर्मकाण्डस्य वाक्यं
चित्तैकाग्र्यद्वारतो ध्यानवाक्यम् ।

साक्षादेतत्तत्त्वमस्यादिवाक्यं
ब्रह्मानन्दे स्वप्रकाशे प्रयाति ॥७२४॥
इत्यादिवचनैः स्पष्टं वेदाः काण्डत्रयात्मिकाः ।
पारम्पर्येण वा साक्षात्पर्यवस्यन्ति ब्रह्मणि ॥७२५॥
मुक्तिश्च ब्रह्मरूपैव सर्ववेदान्तसम्मतः ।
इत्थश्च सर्ववेदानां ज्ञानादेव मुक्तिर्मता ॥७२६॥
अनुग्रहो बहूनाञ्च न्याय्योऽभियुक्तसम्मतः ।
ज्ञानस्य मुक्तिहेतुत्वं वाक्यानि तु बहूनि हि ॥७२७॥
वदन्त्यत्र यथोक्तानि तथानुक्तान्यनेकशः ।
ततोऽपि मुक्तिहेतुत्वं तस्यैव सम्प्रसिद्ध्यति ॥७२८॥
श्रुतिस्मृत्युक्तयश्चेत्थं ज्ञानादेवाहुर्मुक्तताम् ।
दैशिक दीक्षया जाताच्छतशोऽथ सहस्रशः ॥७२९॥

॥ इति द्वितीयः प्रकाशः ॥

---

# तृतीयः प्रकाशः

हठयोगस्य साक्षाद्यद्वदन्ति मुक्तिहेतुताम् ।
श्रुतिस्मृतिविरुद्धत्वादत्यन्तासङ्गतं हि तत् ॥१॥
विरोधे त्वनपेक्षं स्यादनुमानमसत्यपि ।
साक्षाच्छ्रुतिविरोधे हि वाक्यात्तदनुसारिणः ॥२॥
स्मृतेरपि तथात्वे च हेया स्मृतिप्रमाणता ।
इति सूत्रकृदुक्तेश्च न हठो मोक्षसाधनम् ॥३॥
ब्रह्मात्मैकत्वबोधेन मनसो दृश्यमार्जनम् ।
दृश्यं नास्तीति सिद्धश्चेत्तदा निर्वाण निर्वृतिः ॥४॥
हठयोगस्य निर्वाणहेतुत्वञ्चेदुपेयते ।
दृश्यस्य मार्जनं तेन न कथंचन सम्भवेत् ॥५॥
स्मृतस्य मार्जनं सिद्ध्येन्नास्मृतस्य कथञ्चन ।
तदर्थं स्मृत्यपेक्षायां योगस्य भङ्ग आपतेत् ॥६॥
अज्ञानादेव बन्धोऽयं भाति हि स्वप्नवत्ततः ।
ज्ञानादेवात्मनो मोक्षो न तु कर्मसमाधिभिः ॥७॥
ज्ञानमेव सुसम्पाद्यं सर्वथैव मुमुक्षुभिः ।
विना ज्ञानं न मुक्तिः स्यादितरैः साधनैः क्वचित् ॥८॥
साङ्ख्यज्ञानेन नैवापि योगमार्गेण वा पुनः ।
आम्नायनिरपेक्षेण निर्वाणमधिगम्यते ॥९॥
श्रुतिस्तु वैदिकादात्मैकत्वविज्ञानतः परम् ।
निःश्रेयसस्य हेतुं वै निवारयत्युद्घोषतः ॥१०॥

ज्ञानादेव तु कैवल्यं नान्यः पन्था विमुक्तये ।
द्वितीयाद्भयं भवतीत्येवमाद्यात्मिका स्फुटम् ॥११॥
द्वैतिनः किल ते सांख्यायोगा नात्मैक्यदर्शिनः ।
अद्वैतदर्शनात् साध्या मुक्तिस्तेषां कुतो भवेत् ॥१२॥
न चैवाष्टाङ्गयोगेन न साङ्ख्येन न कर्मणा ।
ब्रह्मात्मैकत्वबोधेन मोक्षः सिद्ध्यति नान्यथा ॥१३॥
न तीर्थेन न दानेन न स्नानान्नान्यविद्यया ।
न साङ्ख्येन न योगेन न तपोभिर्न चाध्वरैः ॥१४॥
ज्ञानमात्रेण सर्वेषां रामो मुक्तिमुवाच ह ।
न कर्मसांख्ययोगोपासनादिभिरति स्फुटम् ॥१५॥
बन्धो मिथ्येति वेदान्तैः सम्यगेवावधारितम् ।
तन्निवृत्तिर्हि मोक्षः स ज्ञानान्यतो न सिद्ध्यति ॥१६॥
यतो मिथ्या भुजगादेर्दृष्टा ज्ञाननिवर्तता ।
न स्थाणौ कल्पितश्चौरो हठयोगान्निवर्तते ॥१७॥
स्वप्रबोधं विना नैव स्वस्वप्नो विनिवर्तते ।
ततोऽपि मुक्तिहेतुत्वं नैति योगोहठाभिधः ॥१८॥
सर्वसन्देहहानाय वेदान्तश्रवणादिकम् ।
सर्वमुत्तरमीमांसा शास्त्रमत्रोपयुज्यते ॥१९॥
ततस्तत्परिपाकेण निदिध्यासननिष्ठता ।
योगशास्त्रन्तु सम्पूर्णमुपक्षीणं भवेदिह ॥२०॥

एवं हि योगशास्त्रस्य समाप्तिं निदिध्यासने ।
श्रवणा मुक्ति हेतुत्वं हठस्य वारयन्ति हि ॥२१॥

निन्दामिहाज्ञविषयां प्रतिपद्यमाना ।
विद्वत्प्रशंसनमथो परितश्च वेदे ॥
अर्थात्प्रतीम इह योगयुजां न मुक्तिः
साक्षाद्भवेदविदितात्मशरीरभाजाम् ॥२२॥
योगस्य ज्ञानरूपत्वं यत्केचित्प्रवदन्ति हि ।
विरुद्धं युक्तितो यस्माद्विद्वद्भिस्तन्निराकृतम् ॥२३॥
सम्प्रज्ञाताख्ययोगस्य वदन्ति ज्ञानहेतुताम् ।
असम्प्रज्ञातयोगस्य ह्यपास्ता मुक्तिहेतुता ॥२४॥
ज्ञानस्यैव तु सा प्रोक्ता भाष्यकाररितैस्फुटम् ।
योगस्ततोऽपि न ज्ञानं किन्तु भिन्नमुपेयताम् ॥२५॥
इन्द्रियप्रयुक्ताभ्रान्तिस्तन्निरोधान्निरुध्यते ।
योगस्यैवं फलं भ्रान्ते रोधोविद्वद्भिरुच्यते ॥२६॥
ज्ञानस्य तु फलं भ्रान्तेर्बाधो वेदान्तसम्मतः ।
फलभेदादपीत्थं वै तयोरैक्यं न सिद्ध्यति ॥२७॥
असम्प्रज्ञातयोगस्य द्वैतादर्शन हेतुतः ।
ज्ञानरूपत्वमाशङ्क्य तृप्तिदीपे निराकृतम् ॥२८॥
क्वचिद् हठस्य साक्षाद्यत् हेतुत्वं श्रेयसः श्रुतम् ।
स्तुतिपरतया नेयं श्रुतिस्मृत्यनुसारत ॥२९॥

निरोधकालेऽवस्थानं स्वस्मिन् द्रष्टुर्यदुच्यते ।
व्युत्थानापेक्षया ह्युक्तं न मुक्तिपदभाग्भवेत् ॥३०॥
यस्मात्स्वस्मिन्नवस्थानं कादाचित्कं न सम्भवेत् ।
तस्मान्नित्यास्थितस्यैव भ्रान्त्याऽस्थितिरुपेयताम् ॥३१॥
सा चाज्ञानं विना न स्यात्तच्च ज्ञानेन नश्यति ।
ज्ञानादेव ततो मुक्तिरनिच्छतोऽपिसिद्ध्यति ॥३२॥
मोक्षोपायं सम्यग्ज्ञानं विवेकख्यातिनामकम् ।
पतञ्जलिः स्फुटं प्राह मिथ्याज्ञानविवर्जितम् ॥३३॥
चिकित्साशास्त्रवच्छास्त्रं पातञ्जलञ्च भाष्यकृत् ।
चतुर्व्यूहं ब्रुवन् प्राह ज्ञानादेव हि मुक्तताम् ॥३४॥
रोगो रोगस्य हेतुश्च ह्यारोग्यञ्च तथौषधम् ।
चत्वारः कथिता व्यूहाश्चिकित्साशास्त्रवेदिभि ॥३५॥
दुःख प्रायो हि संसारो हेयश्च द्रष्टृदृश्ययोः ।
संयोगो हेय हेतुश्च प्रधानपुरुषाख्ययोः ॥३६॥
आत्यन्तिकी निवृत्तिश्च तस्य हानं प्रकीर्तितम् ।
हानोपायश्च सम्प्रोक्तः सुधिभिः सम्यग्दर्शनम् ॥३७॥
इत्थञ्च ज्ञानत एव मोक्षः सिध्यति नो हठात् ।
अपवर्गपदव्याख्यां भोक्तृरूपावधारणम् ॥३८॥
प्रकुर्वन् ज्ञानमेवाह स एव मुक्तिसाधनम् ।
सूत्रभाष्यकृदुक्त्येत्थं न हठो मोक्षसाधनम् ॥३९॥

कामानां कारणं साङ्ख्ययोगभिपन्नमत्रहि ।
साङ्ख्ययोगेतिशब्दाभ्यां ज्ञानं ध्यानञ्च वैदिकम्॥ ४०॥
प्रोच्यते खलु नान्यद्धि प्रत्यासत्तेर्हि कारणात् ।
एवं भाष्यकृता सम्यग् निरस्ता मुक्तिहेतुता ॥४१॥
साङ्ख्ययोगस्मृतिभ्यां हि सिद्धयोः साङ्ख्ययोगयोः ।
प्रख्यातयोश्चलोकेऽस्मिन्नवैदिकत्वहेतुना ॥४२॥
न मुक्तिसाधनत्वेन योगस्याधिगतिः श्रुतेः ।
प्रत्यग्बोधाच्छ्रुतौ नान्यन्मोक्षस्य साधनं मतम् ॥४३॥
सम्यग्ज्ञानातिरेकेण नत्वन्यन्मुक्तिसाधनम् ।
श्रुतौ स्मृतौ वा सम्भाव्यं ताभ्यां नान्यस्य मानता ॥४४॥
प्रत्यग्याथात्म्यनिर्णीता वस्मभिरभ्युपेयते ॥४५॥
यथेश्वरादिनिर्णीतौ तार्किकैर्मानमिष्यते ।
स्वतन्त्रमनुमानादि वैदिकैर्नेवमिष्यते ॥४६॥
श्रुत्यादिना विरोधेन योगशास्त्रमपि तथा ।
न च प्रमाणमेतेन योगः प्रत्युक्त इत्यतः ॥४७॥
वार्तिककृद्भिरप्येवं योगस्य मुक्तिहेतुता ।
निरस्ताज्ञानमेवोक्तं मुक्तिहेतुरति स्फुटम् ॥४८॥
ज्ञानादेव तु कैवल्यमन्यः पन्था न विद्यते ।
तमेवविदित्वेत्यादिश्रुतेः कैवल्यसाधनम ॥४९॥
केवलं ज्ञानमेवास्ति न निरोधः कथञ्चन ।

विरोधे श्रुतितो योगशास्त्रस्यानवकाशतः
इति वार्तिकव्याख्यानकर्तृभिः स्फुटमुच्यते ॥५०॥
ज्ञाने सत्यपि वृत्तीनां निरोधस्यानुष्ठेयता ।
उचितोपशमार्थञ्चेत्तत्समाधानमुच्यते ॥५१॥
यत्किञ्चिच्चित्तवृत्तीनां निरोधो नानुष्ठेयताम् ।
अर्हति सर्वसद्भावाद् वक्तव्यः सर्वथैव सः ॥५२॥
ज्ञानादेव हि तात्सिद्धेस्तस्यानुष्ठेयता कुतः ।
प्रत्यग्ज्ञाने निरुध्यन्ते चित्तवृत्तयो यत : ॥५३॥
उदिते परमादित्ये ब्रह्मात्मैकत्वदर्शने ।
अज्ञाने सर्वथाक्षीणे मिथ्याभ्रमैककारणे ॥५४॥
अपुनर्दर्शनायैव दग्धसंशुष्कपर्णवत् ।
चित्तं विगलितं विद्धि वन्हौ घृतलवं यथा ॥५५॥
चित्तमुपशमं याति ज्ञाते तस्मिन्परात्मनि ।
निर्विशेषचिदानन्दे जरामृत्युविवर्जिते ॥५६॥
सम्यगालोकनादेव वासना प्रविलीयते ।
वासना विलये चेतः शममायाति दीपवत् ॥५७॥
निरस्य मुक्ति हेतुत्वं सम्यग्ज्ञानादनन्तरम् ।
अनुष्ठेयत्वमप्येवं योगस्य तैर्निराकृतम् ॥५८॥
मनसः शमनार्थन्तु योगोऽप्यपेक्षितो यदि ।
तथापि मृदुयोगेन शमनं सिध्यति द्रुतम् ॥५९॥

हे मित्र ! प्रिय । हे सखे । किमर्थं धावसि मुहुः ।
पिशाचवन्मुधा नैव शोचसि स्वहिताहितम् ॥६०॥
इत्थं सम्बोधयेच्चित्तमनायासेन धैर्यवान् ।
मृदुयोगं वदन्त्येतद्विद्वांसो वेदपारगाः ॥६१॥
चपलस्य पशोर्यद्वत् प्रवेशाय स्वस्थानके ।
उपायौ द्वौ प्रसिद्धौ स्तो हरिततृणदर्शनम् ॥६२॥
कण्डूयनादिकञ्चाद्यं वाचः पारुष्यमप्यथ ।
दण्डादिभर्त्सनञ्चान्यत्तत्राद्येत प्रवेश्यते ॥६३॥
सहसैव द्वितीयेन धावन्नितस्ततः शनैः ।
चित्तशान्तेरुपायौ द्वौ मृदुयोगो हठस्तथा ॥६४॥
आद्येन मृदुयोगेन चित्तं शीघ्रं प्रशाम्यति ।
द्वितीयहठयोगेन प्रशाम्यति शनैः शनैः ॥६५॥
समुच्चितस्य ज्ञानेन केवलस्यापि कर्मणः ।
मोक्षस्य हेतुतापास्ता भाष्यकारादिभिः स्फुटम् ॥६६॥
हठोऽपि कर्मणो नान्यः सम्भवति कथञ्चन ।
कर्तृतन्त्रं यतः कर्मज्ञानं वस्तुप्रमाणजम् ॥६७॥
हठोऽपि कर्तृतन्त्रोऽयं नैवातन्त्रः कथञ्चन ।
तस्मात्कर्मत्वमेवास्य हठस्य सम्प्रसिध्यति ॥६८॥
ज्ञानस्वरूपता तस्य न सिध्यति कदाचन ।
मोक्षस्य हेतुता त्वस्य दूरापास्ता हठस्य हि ॥६९॥

योगयज्ञादि यज्ञाद्धि द्रव्ययज्ञोपलक्षितात् ।
साक्षान्मोक्षफलत्वेन ज्ञानयज्ञं परं जगुः ॥७०॥
सर्वमेव यतः कर्म प्रतिबन्धनिवारकम् ।
तस्माद्ब्रह्मात्मज्ञाने हि सर्वतः पर्यवस्यति ॥७१॥
अज्ञानं संहृतेर्बीजं तन्नाशो मुक्तिरिष्यते ।
कर्माज्ञानसमुत्थत्वान्नालं तस्यानुपत्तये ॥७२॥
सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिव ।
तस्माद्दुःखोदधेर्हेतोरज्ञानस्यापनुत्तये ।
सम्यग्ज्ञानं सुपर्याप्तं न कर्माज्ञानकार्यतः ॥७३॥
योगादि कृतवीर्यं हि मृत्युं हन्तुं न शक्नुयात् ।
आत्मविद्या कृतं तत्तु शक्नोति तं निवर्तितुम् ॥७४॥
देहाद्यात्मप्रतिपत्तिरज्ञानादात्मनो मृतिः ।
तन्निवृतिः फलं यस्माद्विद्ययैव न चान्यथा ॥६५॥
नित्यमुक्तोऽहमित्येवमवष्टम्भो विद्याकृतम् ।
वीर्यं मुक्तत्वदार्ढ्याख्यं प्रवदान्ति विपाश्चितः ॥७६॥
योगस्येत्थं हि साक्षात्तु निरस्ता मुक्तिहेतुता ।
सम्यग्विज्ञानद्वारेण सा विद्वद्भिरुपेयते ॥७७॥
यथाग्निर्दारुमध्यस्थो नोत्तिष्ठेन्मथनं विना ।
विना चाभ्यासयोगेन ज्ञानदीपस्तथा न हि ॥७८॥
योगाभ्यासं विना ह्येवं स्वात्मा नैव प्रकाशते ।
योगाभ्यासात् प्रपश्यन्ति योगिनः परमं पदम् ॥७९॥

ततो ज्ञानानुसारेण परं ब्रह्म प्रयान्ति ते ।
जिज्ञासुर्हि भृशं तस्माद्यत्नतो योगमभ्यसेत् ॥८०॥

योगाभ्यासाद्भवेद्यस्मात् सर्वदुःखबहिष्कृतः ।
पूर्णानन्दमवाप्नोति विद्वाँन्नैवात्र संशयः ॥८१॥

तस्माद्योगं सदा कृत्वा ततो ज्ञानमवाप्य च ।
विज्ञानसमकालं हि प्राप्नुयाद्ब्रह्ममात्रताम् ॥८२॥

योगाभ्यासरतो नित्यं स्वधर्मनिरतश्च यः ।
प्राणसंयमनेनैव ज्ञानान्मुक्तो भविष्यति ॥८३॥

जन्मान्तरसहस्रेषु यदा नाश्नाति किल्बिषम् ।
तदा पश्यति योगेन संसारोच्छेदनं परम् ॥८४॥

अशक्यं द्रष्टुं तं विषयप्रतिभासावृततनुं ।
मतौ सन्तिष्ठन्तं तनुषु खलु रागादिकलुषम् ॥
अनादिर्योगाप्त्या स्वयमपि विभातं सुखतनुं ।
सुधीः साक्षात्कृत्य प्रमदमथ शोकं विगमयेत् ॥८५॥

शब्दादिविषयज्ञानैः प्रच्छन्नं तं गुहाहितम् ।
कार्यकारणसंघातविषमस्थानसंस्थितम् ॥८६॥

श्रुत्वा मत्वा निदिध्यास्य दुर्दर्शं देवमञ्जसा ।
साक्षात्कृत्य पुराणं तं संसार प्रजहाति हि ॥८७॥

विवेकवैराग्यशमादिसाधनैः
श्रुत्वाथ मत्वा निदिध्यासनं किल ॥

कृत्वाऽविकल्पं परिज्ञाय बुद्धिमान्
इहैव निर्वाणसुखं समृच्छति ॥८८॥

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ।
क्रमाद्वेदान्तविज्ञानं विजायेत न संशयः ॥८९॥

निष्प्रतियोगिकं ब्रह्म ततोऽन्यन्नास्ति किञ्चन ।
इति विज्ञानवान् योगी कृतकृत्यो भवेदिह ॥९०॥

जन्मान्तरसहस्रेषु सर्वेश्वरप्रसादतः ।
यदा हि किल्विषं क्षीणमशुद्ध्यपरनामकम् ॥९१॥

तदा पश्यति योगेन प्रसन्नं परमेश्वरम् ।
प्रत्यगात्मस्वरूपञ्च संसारोच्छेदनं महत् ॥९२॥

समाधिनाऽविकल्पेन यदाऽद्वैतात्मदर्शनम् ।
अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा ॥९३॥

तस्मादष्टाङ्गयोगेन सद्ब्रह्मात्मनि चेद्धने ।
यदा विज्ञाननिष्पत्तिस्तदा संसार निन्हुतिः ॥९४॥

यस्मिन काले स्वमात्मानं योगी जानाति केवलम् ।
तस्मात् कालात् समारभ्य जीवन्मुक्तो भवेदसौ ॥९५॥

यदात्मरूपेण तु ब्रह्मतत्त्व-
मष्टाङ्गयोगी खलु यः प्रपश्येत् ।
स्वयम्प्रकाशं परिणामहीन-
मजं ह्यसङ्गं भवतीह मुक्तः ॥९६॥

निवृत्तो यः पापात्करणचपलत्वादपि च यः
समाधानं प्राप्तः फलमपि न तस्येच्छति बुधः ।
विरक्तो नो रक्तः क्वचिदपि तमाचार्य विवृतं
परिज्ञायात्मानं भवति सततं ब्रह्म परमम् ॥९७॥

विज्ञानवान् यस्तु भवेन्मनीषी
शुचिः समाधानसमन्वितश्च ॥
प्राप्नोति विष्णोः परमं पदं तद्
यस्मात्पुनर्नो खलु जायतेऽत्र ॥९८॥

समाहितेन मनसा सामर्थ्यं विन्दतेऽद्भुतम् ।
विद्याभिधानतस्तस्मादमृतं लभते ध्रुवम् ॥९९॥

ध्यानाभ्यासादृढीकृतं ज्ञानाख्यं ब्रह्मगोचरम् ।
मुक्तिमार्गमवष्टभ्य कृतकृत्यो भवेदिह ॥१००॥

चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते ।
तत्साधनमतो ध्यानं यथावदुपदिश्यते ॥१०१॥

यं विनिद्राजितश्वासाः सन्तुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानस्तस्मै विद्यात्मने नमः ॥१०२॥

सर्वोपाधिविनिर्मुक्तं स्वात्मानं चिन्तयेत् सुधीः ।
एवं यो वेद तत्त्वेन ब्रह्मभूयाय कल्पते ॥१०३॥

ध्यानाद्धि दृष्ट्वा विरजस्तमस्कं
निरञ्जनं निष्कलमक्रियञ्च ।

अदृश्यमग्राह्य मगोत्रवर्णं
समस्तबोद्धारमुपैति विद्वान् ॥१०४॥

चिदानन्दं शुद्धं श्रुतमिह गुरोश्चापि कृपया
परात्मत्वेनाथो मननपरिसम्भावितमपि ॥
परिज्ञाय ध्यानादुरवगममानन्दभरितं
भवन्ति प्राप्य ज्ञास्तमिह खलु भाजो नव मुदाम् ॥१०५॥

अभिध्यानाद्यदात्मानं पश्येत्यषोऽविमूढधीः ।
कामक्रोधादिकान् पाशाँस्तदासर्वानयं त्यजेत् ॥१०६॥
ध्यानाभ्यासं भृशं कृत्वा प्रतिबन्धपरिक्षयात् ।
साक्षात्कृत्य परात्मानं प्राप्नोति परमं पदम् ॥१०७॥

समाधौ सति ब्रह्मात्मनिश्चयो जायते ततः ।
समूलानां विकल्पानां नाशो ह्यात्यन्तिको भवेत ॥१०८॥

समाधिं सर्वदा कुर्वन्विजानाति सर्वात्मताम् ।
तेनाविद्यातिमिरजान्विकल्पान् दहति भृशम् ॥१०९॥

निष्क्रियो निर्विकल्पः सन्ब्रह्मरूपेण तिष्ठति ॥११०॥

दुर्ज्ञेयः परमात्मायं स्थूलवृत्त्या न गृह्यते ।
समाधेः सूक्ष्मया वृत्त्या ज्ञायते शुद्धबुद्धिभिः ॥१११॥

अभ्यासपरिपाकेण विकल्पवर्जितो यदा ।
समाधिरद्वयानन्दरसानुभावकस्तदा ॥११२॥

समस्तवासनानाशो यदाऽनेन समाधिना ।
तदा स्वरूपविस्फूर्त्तिरनायासेन वै भवेत् ॥११३॥

ब्रह्मणस्तत्त्वविज्ञानं निर्विकल्पसमाधिना ।
जायते ह्यन्यथा नैव चञ्चलत्वान्मनोगतेः ॥११४॥

यतेन्द्रियः समादध्यात्प्रत्यगात्मनि निर्द्वये ।
ब्रह्मात्मैकत्वज्ञानेनाविद्यकबन्धध्वंसनम् ॥११५॥

मनोनिरोधतश्चाहं वासना क्षीयते ततः ।
ब्रह्मानन्दानुभूतिः स्यान्निरोधव्यं मनस्ततः ॥११६॥

विरक्तस्य समाधिः स्याद्बोधः समाहितस्य हि ।
बुद्धतत्त्वस्य मुक्तिः स्यान्मुक्तस्यैव सुखानुभूः ॥११७॥

स्वस्मिन्समाहितात्मा सन् पश्यत्यात्मानमद्वयम् ।
ततः संसारदुःखस्य ह्यन्तं गच्छति कोविदः ॥११८॥

समाध्येकाग्रया बुद्ध्या पश्यतात्मानमद्वयम् ।
ब्रह्मात्मना स्थितिं मुक्तिं ततः प्राप्नोत्यसंशयम् ॥११९॥

तत्तत्त्ववेदिनो भूत्वा ज्ञानध्यान समाधिभिः ।
अवापुर्मुक्तिमपरे पुरुषा ध्वस्तबन्धनाः ॥१२०॥

एवं संचिन्तयन्विष्णुमभेदेनात्मनोद्विजः ।
तन्मयत्वमवापाग्र्यं मेने चात्मानमच्युतम् ॥१२१॥

अष्टाङ्गयोगनिरतैर्ब्रह्मचर्यादिसाधनैः ।
अपि विज्ञायते ब्रह्म गुरुशास्त्रोपदेशतः ॥१२२॥

परात्माष्टाङ्गयोगेन योजयत्यधिकारिणम् ।
स्वस्मिँन्निश्चयरूपाया बुद्धेः स जनको भवेत् ॥१२३॥

समाहितेन मनसा साक्षात्कारः प्रजायते ।
ब्रह्मानन्दस्य सम्प्राप्त्या ततो दुःखं न संव्रजेत् ॥१२४॥

विघ्नापापे भवेद्योगे इच्छापश्चादिमं पुमान् ।
कुर्यात्तस्माद्भवेत्तस्य मनसैवात्मदर्शनम् ॥१२५॥

उत्पन्नेऽष्टाङ्गयोगे हि माया कार्येण संयुता ।
आत्मज्ञानान्निनष्टा सा पुनर्नैव भविष्यति ॥१२६॥

योगात्प्रत्यक्षविज्ञानं प्राप्य भाग्याधिकः पुमान् ।
जन्मादिरहितं तद्वद्ध्रुवं विगतविक्रियम् ॥१२७॥

कार्यकारणनिर्मुक्तमानन्दात्मानमद्वयम् ।
प्रत्यक्षीकुरुते तर्हि सर्वपापच्छिदिर्भवेत् ॥१२८॥

योगिभिरवगम्यो यो वेदोक्तः परमेश्वरः ।
योगेनात्मतया ज्ञात्वा तमेवाप्नोति निर्द्वयम् ॥१२९॥

अष्टाङ्गयोगतः स्वस्य सम्पादयति शीघ्रतः ।
ब्रह्मात्मविषयं ज्ञानं सर्वदुःखविनाशनम् ॥१३०॥

सम्प्रज्ञातसमाधेर्हि बहिर्दृष्टेरुत्तिष्ठति ।
निर्विकल्पसमाध्युत्थसाक्षात्तत्त्वावबोधतः ॥१३१॥

संसारघनपाशस्य ह्यविद्याख्यैकपञ्जरम् ।
भङ्क्त्वा च शीघ्रमेवाथ पूर्णानन्देऽवतिष्ठते ॥१३२॥

समाधिनाऽविकल्पेन यदाऽद्वैतात्मदर्शनम् ।
अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा ॥१३३॥

समाधौ निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
साक्षात्करोति विद्वाँश्च निःसीमनभसः समम् ॥१३४॥

मनसा निश्चलेनाशु निर्विकल्पसमाधिना ।
प्रपश्यत्यात्मनस्तत्त्वं पुनर्न संशयो यतः ॥१३५॥

निर्विकल्पसमाध्युत्थसाक्षात्कारमवाप्य वै ।
उद्दालको मुनिर्नाम ब्रह्माद्वैतमवाप ह ॥१३६॥

निर्विकल्पसमाध्यभ्यासयोगेन हि सूक्ष्मता ।
बुद्धेः सञ्जायते साक्षात्कारावसानमञ्जसा ॥१३७॥

साक्षात्कारसमुत्पत्तौ शुद्धं बुद्धं सदद्वयम् ।
नित्यमुक्तस्वभावं च ब्रह्मानन्दं समश्नुते ॥३८॥

शान्ता यतिवरा ब्रह्म ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्ति ह्यसंशयम् ॥१३९॥

ध्यानयोगाद्धि वैराग्यं लब्ध्वा ज्ञानमनुत्तमम् ।
प्राप्नोति शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ॥१४०॥

पश्यति सगुणं ब्रह्म सम्प्रज्ञातसमाधिना ।
असम्प्रज्ञातयोगेन निर्गुणं ब्रह्म पश्यति ॥१४१॥

इषीकां च यथा मुञ्जात् कश्चिन्निष्कृष्य दर्शयत् ।
योगी निष्कृष्य चात्मानं तथा पश्यति देहतः ॥१४२॥

शक्नुवन्ति यदा योक्तुं साधवो मन आत्मनि ।
स्वतः सिद्धं तदात्मानं शुद्धं पश्यन्ति योगिनः ॥१४३॥
सम्यग्युक्तो यदात्मानमात्मन्येवानुपश्यति ।
तदैव न स्पृहयते साक्षादपि शतक्रतोः ॥१४४॥
इत्येवं सर्वदात्मानं विद्याद्योगी समाहितः ।
ज्ञात्वात्मानं स्वदेहस्थं विद्वान्मुक्तो ध्रुवो भवेत् ॥१४५॥
कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च ।
य एवं वेद तत्त्वार्थमन्यथा ह्यात्महा भवेत् ॥१४६॥
प्रत्यग्याथात्म्यविज्ञानं समाहितस्य सिद्ध्यति ।
नेतरस्य निदिध्यासनविधानश्रुतेरिति ॥१४७॥
श्रुत्वा मत्वा निदिध्यस्य साक्षात्कृत्य परं मुनिः ।
बुद्धिप्रचारद्रष्टारं प्राप्नोत्यसङ्गमद्वयम् ॥१४८॥
योगमेकं विहायायमानन्दात्मा महेश्वरः ।
नैव वाचा न मनसा ज्ञातुं शक्यो न चक्षुषा ॥१४९॥

सर्वाश्रयं ह्युद्गतमेव तस्मात्
ब्रह्माक्षरं योगपरा महान्तः ॥
सर्वान्तरं वेदविदो विदित्वा
लीनाः परे ब्रह्मणि योनिमुक्ताः ॥१५०॥
एकादशद्वारमिदं पुरं किल
अजस्य नित्य स्थितज्ञानरूपिणः ॥

ध्यात्वा तमीशं प्रतिबुद्ध्य शोचति
न मुक्त एवात्र पुनर्विमुच्यते ॥१५१॥
परत्वानुसन्धानात् सकार्याज्ञानवर्जितम् ।
यो वीक्षते परं ब्रह्म भवति स तदेव हि ॥१५२॥
आत्मनः श्रवणं कृत्वा मननं ध्यानमेव च ।
साक्षात्कारावसानं हि ततो मुक्तिमाप्नुयात् ॥१५३॥
मननध्यानसंयुक्तं मनोऽत्र श्रुतिमानतः ।
प्रत्यक्षं जनयेज् ज्ञानमानन्दात्मनि निर्द्वये ॥१५४॥
अहं ब्रह्मेतिवाक्यार्थं शृण्वानो गुरुद्वारतः ।
मननञ्च तथा ध्यानं कुर्याज्ज्ञानाय यत्नतः ॥१५५॥
यावन्न साक्षादात्मायं ज्ञायते तेन सर्वगः ।
साक्षात्कारं हि सम्पाद्य पश्चात्कुर्याद्यथेप्सितम् ॥१५६॥
निर्णीतस्यात्मतत्त्वस्य साक्षात्कारोपपत्तये ।
प्रोक्तो हठाभिधो योगो मोक्षधर्मेष्वतिस्फुटम् ॥१५७॥
योगस्य ज्ञानहेतुत्वं धारणाद्यात्मनः किल ।
पराशरो मुनिः प्राह मैत्रेयाय सपृच्छते ॥१५८॥
विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्रागवादिषम् ।
स्वतन्त्रमेव विज्ञानं मुक्तिमात्रफलं यतः ॥१५९॥
योगजं ह्यात्मविज्ञानं प्रापकं ब्रह्मणि परे ।
जीवं प्रापयति प्राप्ये प्रक्षीणाशेषभावनम् ॥१६०॥

प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा
छित्त्वा सर्वं संशयबन्धं विषयौघान् ।
पश्यन्तीशं यं गतमोहा यतयस्तं
वन्दे रामं रत्नकिरीटं रविभासम् ॥१६१॥

अहमेव सर्वात्मास्मि मद्भिन्नं नास्ति किञ्चन ।
एवं ध्यात्वा प्रपश्यन्ति कृतकृत्यास्त एव हि ॥१६२॥
प्राप्तः समाधियोगेन मुमुक्षुर्योग्यतां यदा ।
तदान्तःकरणे ज्ञानं लभते नात्र संशयः ॥१६३॥
निरुद्धं सन्मनस्तच्छास्त्रसंस्कारेण संस्कृतम् ।
मोक्षेच्छोः कुरुते स्वात्मसाक्षात्कारमसंशयम् ॥१६४॥
ओमित्येवं किलात्मानं ध्यायथेत्यादिवाक्यतः ।
योऽयमौपनिषदात्मप्रतिपत्तिप्रयोजनः ॥१६५॥
समाधिरुपदिष्टो हि वेदान्तेषु सहस्रशः ।
आत्मत्वेऽसतिकर्तृत्वे सोऽपि नैवोपपद्यते ॥१६६॥
सूत्रभाष्यकृतावेवं योगस्य ज्ञप्तिहेतुताम् ।
स्पष्टमाख्यातवन्तौ हि अत्युद्घोषपुरस्सरम् ॥१६७॥
सम्यग्दर्शनहेतुत्वं योगस्य शङ्करोऽब्रवीत् ।
एतेन योगः प्रत्युक्तः व्याकुर्वन्सूत्रमित्यपि ॥१६८॥
एतदर्थपरत्वेन लिङ्गमपि च वैदिकम् ।
काठकाद्युक्तमुक्तवान् शतशोऽथ सहस्रशः ॥१६९॥

योगशास्त्रेऽपि च सम्यग्दर्शनस्यैव कारणम् ।
योगोऽङ्गीक्रियतेऽत्रापि सूत्रमपि किलोक्तवान् ॥१७०॥

अथ तत्त्वस्य दर्शन ह्युपायपो योग इत्यपि ।
साक्षाच्च मुक्तिहेतुत्वं योगस्य तैर्निराकृतम् ॥

ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ।
इत्यादिवचनैः स्पष्टं सूत्रकारादिभिः किल ॥१७२॥

हिरण्यगर्भो भगवान् शरण्यो
योगस्य वक्ता हि स्मृतौ प्रसिद्धः ॥
पुरातनो दर्शनसाधनत्वं
ब्रुवँश्च संशीतिमपाकरोति ॥२७३॥

आत्मनो ज्ञानकामः सन्नेनं योगं समाचरेत् ।
समाचरँश्च तं नित्यं ज्ञानान्मुक्तो भविष्यति ॥१७४॥

इत्यादिवचनैश्चास्य स्पष्टं ज्ञानस्य हेतुता ॥
प्रोक्ता चात्मपुराणे हि शङ्करानन्दस्वामिना ॥२७५॥

असम्प्रज्ञातयोगस्य प्रतिबन्धनिवृत्तितः ॥
उक्ता तत्त्वविवेके हि प्रत्यक्षज्ञानहेतुता ॥१७६॥

चित्तवृत्तिनिरोधो यस्तस्य बोधोपकारिता ।
साक्षान्मोक्षप्रदत्वेन बोधस्योक्ता प्रधानता ॥
चित्रदीपे ततो विद्वो योगस्य ज्ञानहेतुताम् ॥१७७॥

निर्गुणोपासनात् पश्चात्समाधिः सविकल्पकः ।
निर्विकल्पसमाधिः स्यात्ततोऽनायासतः किल ॥१७८॥
ततस्तत्त्वमसीत्यादिवाक्याज्जायेत तत्त्वधीः ।
योगस्य ज्ञानहेतुत्वं ध्यानदीपे निरूपितम् ॥१७९॥
श्रुतयोऽमृतबिन्द्वाद्याः प्रमाणमत्रदर्शितम् ॥१८०॥
ब्रह्मानन्दाभिधे ग्रन्थे प्रथमाध्याय ईरिता ।
ब्रह्मापरोक्षद्वारेण योगस्य मुक्तिहेतुता ॥१८१॥
समाधि संस्कृतेनापि मनसाऽऽत्मावगम्यते ।
योगे सर्वाधिकाराद्धि तस्माज्ज्ञानं प्रजायते ॥१८२॥
उत्पन्नतत्त्वज्ञानेन मुच्यन्ते सर्व एव हि ।
इत्यादिवचनैर्वेदस्मृतिभ्यामविरोधतः ॥१८३॥
वैष्णवस्य पदस्योक्त्वा हि दुर्विज्ञेयतां पुरा ।
तस्यैवावगमार्थाय योगं दर्शयति श्रुतिः ॥१८४॥

वाचं नियच्छात्मनि तं नियच्छ
बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि ॥
तत्रापि पूर्णात्मनि निर्विकल्पे
निश्चित्य शान्तिं परमां भजस्व ॥१८५॥

सम्यग्दर्शनमुद्दिश्य ह्यात्मा द्रष्टव्य इत्यपि ।
योगो हि विहितो वेदे निदिध्यासनवाक्यतः ॥१८६॥
मुख्याधिकारिणो ज्ञानं विचारेणैव जायते ।
मन्दाधिकारिणस्तत्तु जायते ध्यानयोगतः ॥१८७॥

यमाद्यङ्गानि प्रोक्तानि ध्यानयोगस्य सिद्धये ।
निदिध्यासननाम्नो वै किलाचार्यैरतिस्फुटम् ॥१८८॥

ज्ञानस्य हेतुता तस्य सिद्धा श्रोतव्यवाक्यतः ।
अतोऽपिज्ञानहेतुत्वं योगस्य सम्प्रसिध्यति ॥१८९॥

तत्त्वविज्ञानद्वारेण मुक्तिसाधनता द्वयोः ।
विचारयोगयोः कार्यावधिकारिविभेदतः ॥१९०॥

तत्कारणं साङ्ख्ययोगाधिगम्यमिति हि श्रुतिः ।
उभयोर्ज्ञानद्वारेण ब्रवीति मुक्तिहेतुताम् ॥१९१॥

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
सम्यग्विज्ञान द्वारेण मोक्षाख्यं परमं सुखम् ॥१९२॥

एकं साङ्ख्यं फलाद्योगं यः पश्यति स पश्यति ।
यस्तु श्रुतेर्विरुद्धः स वाध्यते साङ्ख्ययोगयोः ॥१९३॥

शरीरं त्र्युन्नतं स्थाप्य समञ्चेत्यादिना बहु ।
प्रपञ्चमासनादीनां प्रकल्पनापुरस्सरम् ॥१९४॥

योगस्यैव विधानं हि श्वेताश्वतरशाखिनाम् ।
सम्यग्ज्ञानाभ्युपायस्यह्युपनिषदि दृश्यते ॥१९५॥

कारणं ब्रह्मज्ञानस्यह्यष्टाङ्गो योग उच्यते ।
संक्षेपविस्तराभ्याञ्च त्रिशिखिब्राह्मणश्रुतौ ॥१९६॥

जीवतो विदुषो मुक्तिर्जीवन्मुक्तिरुदाहृता ।
योगाद्विज्ञानद्वारेण दर्शनोपनिषद्यपि ॥१९७॥

योगस्य ज्ञानद्वारेण परात्मावाप्तिहेतुता ।
अतिस्पष्टतरमुक्ता योगचूडामणि श्रुतौ ॥१९१॥
समाधौ परमं ज्योतिरनन्तं ब्रह्म दृश्यते ।
तस्मिन् दृष्टे क्रिया कर्म यातायातो न विद्यते ॥१९९॥
राजयोगो हठयोगाद्भवति नैव तं विना ।
योगतत्त्वश्रुतिर्वक्ति हठस्य ज्ञानहेतुताम् ॥२००॥
योगजामात्मविद्याञ्च नचिकेताः कुमारकः ।
लब्ध्वाऽज्ञानं सकार्ये च ह्यत्यन्तं क्षयमागते ॥२०१॥
अस्मिन्नेव शरीरे सजीवन्ब्रह्माद्वयं परम् ।
आनन्दात्मस्वरूपं तत् स्वप्रभं प्राप्तवानपि ॥२०२॥
ब्रह्मविद्यां यमेनोक्तां नचिकेता लब्ध्वा किल ।
अविद्याकामकर्मणामभावान्मुक्तिमाप्तवान्–
अविद्यालेशरहितो दुःखशोकविवर्जितः ॥२०३॥
मरणेन विनिर्मुक्तो मोक्षमेव गतो मुनिः ॥२०४॥

यो नित्यनित्यश्च चितिश्चितीना–
मेको बहूनाञ्च ददाति कामान् ॥
तं कारणं साङ्ख्यसमाधिवेद्यं
ज्ञात्वा हि देवं खलु पाशमोक्षः ॥२०५॥

एकाग्रसूक्ष्मप्रतिपद्भिर्भाविता
दृष्टिं विधाय श्रुतिराह साधनम् ॥

तस्या मनोधीन्द्रियरोधनं किल
ततोऽपि योगं मतिसाधनं विदुः ॥२०६॥

असम्प्रज्ञातयोगस्याप्युक्ता ज्ञानस्य हेतुता ।
हठप्रदीपिकायां हि स्वात्मारामेण योगिना ॥२०७॥

व्याख्यायामपि तस्याश्च ह्युपदेशे चतुर्थके ।
व्याख्यानकर्तृभिः सम्यगयमर्थः प्रसाधितः ॥२०८॥

असम्प्रज्ञातयोगाद्धि स्वस्वरूपापरोक्षता ।
ततो मुक्तिद्वयञ्चापि गुरुवाक्येन लभ्यते ॥२०९॥

आत्मज्ञानं विना योगं न सिद्ध्यति यतस्ततः ।
सम्यग्ज्ञानस्य हेतुत्वं तस्यैवोक्तं सविस्तरम् ।
श्रुतिस्मृति पुराणेतिहासादिवचनैः स्फुटम् ॥२१०॥

समाध्यभ्यासपाकेन शुद्धान्तःकरणः पुमान् ।
पश्यति प्रत्यगात्मानं ततोऽज्ञानस्य संक्षयः ॥२११॥

इति तदुक्तिस्तस्य सम्यग्दर्शनहेतुता ।
अशुद्धिक्षयद्वारेण स्फुटतरं प्रसिध्यति ॥२१२॥

असम्प्रज्ञातयोगस्यप्येवमुक्ता मनीषिभिः ।
अशुद्धिक्षयद्वारेण सम्यग्दर्शनहेतुता ॥२१३॥

समाधिनिर्धूतमलस्य चेतस–
इति ब्रुवन्ती श्रुतिराह सादरम् ॥

अशुद्धिनाशस्य च हेतुतां किल
योगस्य संशीतिमपाकरोति नः ॥२१४॥

रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् ।
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ॥२१५॥

एवमभ्यसतो योगं पातकानि महान्ति च ।
क्षुद्राणि च विनश्यन्ति सर्वाण्येव न संशयः ॥२१६॥

नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमद्भुतम् ।
पुनर्ब्रह्मादिभोगेभ्यो वैराग्यं जायते हृदि ॥२१७॥

विरक्तस्य तु संसाराज्ज्ञानं कैवल्यसाधनम् ।
तेन पाशापहानिः स्याज्ज्ञात्वा देवं सदाशिवम् ।
प्राणायामेन पापे तु नष्टे चित्तं हि शुद्ध्यति ॥२१८॥

तदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन ब्रह्म सम्पद्यते ततः ॥२१९॥

प्राणायामविशुद्धात्मा यस्मात्पश्यति तत्परम् ।
तस्मान्नातः परं किञ्चित्प्राणायामादिति श्रुतिः ॥२२०॥

योगाङ्गानामनुष्ठानादशुद्धिक्षयमेति हि ।
विवेकख्यातिपर्यन्तं ज्ञानदीप्तिस्ततो भवेत् ॥२२१॥

इति सूत्रकृदुक्त्यापि ह्यशुद्धिक्षयहेतुता ।
नूनमष्टाङ्गयोगस्य स्फुटतरं प्रसिद्ध्यति ॥२२२॥

अशुद्धौ तु विनष्टायां वैराग्यं जायते हृदि ।
विरक्तस्य तु संसाराद्विज्ञानञ्च श्रुतीरितम् ॥२२३॥

एवं श्रुत्यनुसारेण योगस्य ज्ञानहेतुता ।
अशुद्धिक्षयद्वारेणाप्यभ्युपेया मनीषिभिः ॥२२४॥

संन्यासयोगतः शुद्धचित्ता इत्यादिवाक्यतः ।
योगस्य शुद्धिहेतुत्वं स्पष्टमेवावगम्यते ॥२२५॥

यावच्चित्तस्य शुद्धिः स्यात्तावद्योगं समभ्यसेत् ।
पश्चाद्विज्ञानद्वारेण ब्रह्मभावं समश्नुते ॥२२६॥

षष्ठे मासे तु योगस्य प्रभावाच्छुद्धमानसः ।
योगी संन्यस्य कर्माणि सर्वाणि निरहंकृति ॥२२७॥
गुरुवाक्यात् सकृच्छ्रुत्वा ह्यानन्दात्मानमीश्वरम् ।
साक्षात्करोति मनुजः संशयादिविवर्जितः ॥२२८॥
साक्षात्कृतेऽथ तस्मिन्स जीवन्कैवल्यमाप्नुयात् ।
ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ॥२२९॥
निवातदीपवच्चित्तं समाधिरभिधीयते ॥२३०॥

अनादाविह संसारे सञ्चिताः कर्मकोटयः ।
अनेन विलयं यान्ति शुद्धो धर्मो विवर्धते ॥२३१॥
धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः ।
वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥२३२॥

अमुना वासनाजाले निःशेषं प्रविलायिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसञ्चये ॥२३३॥
वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ॥२३४॥
अपरोक्षात्मविज्ञानं प्रतिबन्धपरिक्षयात् ।
वाक्यादेव यदोत्पन्नं जीवन्मुक्तस्तदा भवेत् ॥२३५॥
इत्थं विज्ञानद्वारेण योगस्य मुक्तिहेतुताम् ।
साक्षादेव वदतीह पैङ्गलोपनिषच्छ्रुतिः ॥२३६॥
प्रतिबन्धनिवृत्तौ च योगस्यासतः श्रुतेः ।
वाक्यादप्रतिबद्धाद्धि साक्षात्कारः प्रसिध्यति ॥२३७॥
यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानं नियच्छेन्महति तद्यच्छेच्छान्त आत्मनि ॥२३८॥
इत्युक्तो यो निरोधः स बुद्धेरैकाग्र्यसिद्धये ।
तदैकाग्र्यं विना यस्मात्सूक्ष्मतत्त्वं न ज्ञायते ॥२३९॥
वागादिमिन्द्रियगणं ज्ञानकर्मोभयात्मकम् ।
सुखार्थिनि मनस्यादौ नियच्छे छान्तिसंयुतः ॥२४०॥
मनःस्तब्धं बलान्नित्यं प्रमादकरणोद्यतम् ।
नियच्छेन्निश्चयात्मिकयां बुद्धौ महागजोपमम् ॥२४१॥
बुद्धिं तां महतीशाख्ये ज्ञाने बुद्ध्यौघकारणे ।
नियच्छेत्तच्च विज्ञानमानन्दात्मनि केवले ॥२४२॥

अहं ब्रह्मेतिविज्ञानादविद्याकञ्चुकक्षये ।
हिरण्यगर्भबुद्धिः सा आनन्दात्मनि लीयते ॥२४३॥
इत्यादिवचनैश्चापि बुद्धेरैकाग्र्यद्वारतः ।
योगस्य ज्ञानहेतुत्वं स्फुटतरं प्रसिध्यति ॥२४४॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥२४५॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदाभूयाद्योगो हि प्रभवाप्ययौ ॥२४६॥
इति मन्त्रद्वयोक्तञ्च योगं दोषनिवारणे ।
पूज्यपादो ब्रुवन् हेतुं प्राह ज्ञानस्य हेतुताम् ॥२४७॥
दोषनिवृत्तिद्वारेण ज्ञानस्य जनकत्वतः ।
ततोऽपिज्ञानद्वारेण मोक्षः सिध्यति योगतः ॥२४८॥
जीवतो विदुषो नास्याः प्राप्तितुल्यापरा गतिः ।
मनोबुद्धीन्द्रियाणां स्याद्यदैकाग्र्यं निरन्तरम् ॥२४९॥
एतेषां निश्चलीभाव आनन्दात्मा स्वयम्प्रभः ।
प्रतिभाति यतो दुःखं नाणुमात्रञ्च गच्छति ॥२५०॥
सर्वदुःखवियोगाञ्च लक्षणायाविरोधिनि ।
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ॥२५१॥
ब्रह्मात्मैक्यमतिर्मुख्यो योगो नेन्द्रियधारणाम् ।
विनाभवति कामादिप्रमादाभास एव वा ॥२५२॥

अप्रमत्तः पुमान् ज्ञानी संसारतरणे किल ।
समर्थो भवति श्रीमान् हनूमानिव सागरात् ॥२५३॥
इत्यादिवचनैः स्पष्टं विक्षेपदोषहानतः ।
ज्ञानद्वारेण संसिद्धा योगस्य मुक्तिहेतुता ॥२५४॥
प्राणायामेन पापे तु नष्टे चित्तं प्रसीदति ।
तस्य ब्रह्मस्थितिं प्राह प्राणान्प्रपीड्येति श्रुतिः ॥२५५॥
निष्ठालक्षणया स्थित्या ब्रह्मात्मानं प्रपद्यते ।
सकार्याज्ञानबाधेन शुद्धं बुद्धं सदद्वयम् ॥२५६॥
नित्यमुक्तस्वभावञ्च चिदानन्दैकविग्रहम् ।
ततोऽपि ज्ञानत एव मोक्षः सिध्यति योगतः ॥२५७॥
गीतावाक्यानि यान्यत्र हठप्रकाशकानि हि ।
उक्तानि तानि नीतानि व्याख्यानकृद्भिरन्यथा ॥२५८॥
भगवत्पूज्यपादाश्च गीताव्याख्यानतत्पराः ।
ध्यानयोगपराण्याहुस्तानि सर्वाण्यतिस्फुटम् ॥२५९॥
ज्ञानस्य चान्तरङ्गं हि ध्यानयोगं वदन्ति ते ।
ततोऽपि ज्ञानद्वारैव मोक्षः सिध्यति योगतः ॥२६०॥
ध्यानाभ्यासवशीकृतेन मनसा यन्निर्गुणं निष्क्रियं ।
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ॥
अस्माकन्तु तदेव लोचनचमत्काराय भूयाच्चिरं ॥
कालिन्दीपुलिने तु यत्किमपितन्नीलं तमो धावति ॥२६१॥

योगस्य ज्ञानहेतुत्वं भक्तेः प्राशस्त्यमेव च ।
एवं स्फुटतरं प्रोक्तं मधुसूदनस्वामिना ॥२६२॥

पश्यन्नुपैतीह च तुष्टिमुत्तमां
वेत्तीह नित्यं सुखमप्यतीन्द्रियम् ॥
स्वबुद्धिवेद्यञ्च वदन् जनार्दनो
योगस्य ज्ञानम्प्रति शेषतांवदेत् ॥२६३॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
ध्यानयोगस्य वक्तीत्थं ज्ञानस्य हेतुतां हरिः ॥२६४॥

वैराग्याभ्यासयुक्तस्य यतेन्द्रियस्य योगिनः ।
विज्ञानान्मुक्तिरित्याह ज्ञात्वा मां शान्तिमृच्छति ॥२६५॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२६६॥

इत्यादिवचनैः स्पष्टं ब्रह्मात्मैकत्वदर्शनम् ।
योगस्य फलमुक्तवान् संसारोच्छेदकारणम् ॥२६७॥

गीतायामष्टमेऽध्याये ब्रह्मलोकंगतस्य हि ।
योगिनो ज्ञानद्वारेण मुक्तिः प्रोक्ता ह्यतिस्फुटम् ॥२६८॥

शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः ।
सुषुप्तः पुरुषो यद्वच्छब्देनैवानुबुद्ध्यते ॥२६९॥

तत्त्वं पदार्थयोरैक्यं वाक्यात्साक्षात्करोति यः ।
येन केन प्रकारेण व्यवहरन्स मुच्यते ॥२७०॥

नित्यमुक्तत्वविज्ञानं वाक्यादेवोपजायते ।
ततो निर्दुःख आत्मायमवक्रियोऽवशिष्यते ॥२७१॥

अत्रैव जन्मनि भवेदपवर्गदापि
वाक्यप्रसूतमनुभूतिफलावसानम् ॥
ज्ञानं निवारकनिमित्तवशादमुष्मिन्
जन्मन्यपीति वचनादवगम्यते हि ॥२७२॥

श्रवणमननाभ्याञ्च निदिध्यासनपाकतः ।
वाक्याद्धि जायते साक्षात्कारो मोक्षस्य साधनम् ॥२७३॥

तत्त्वमस्यादिवाक्याद्धि ब्रह्माहमितिनिश्चयात् ।
सर्वदुःखनिवृत्तिः स्यादानन्दावाप्तिरेव च ॥२७४॥

इत्यादिवचनैः पैङ्गलोपनिषच्छ्रुत्यादिभिः ।
बहुभिरपि पूर्वोक्तैर्वाक्यादेवापरोक्षधीः ॥२७५॥

समूलानर्थहान्याख्यमुक्तिफलावसायिनी ।
संसिद्धा ह्यन्यथा कर्तुं व्यर्थजल्पैर्न शक्यते ॥२७६॥

शाब्दापरोक्षवादो हि वेदान्तेषु निरूपितः ।
आचार्यैर्बहुदृष्टान्तैः सर्वज्ञात्मप्रभृतिभिः ॥२७७॥

अपरोक्षार्थविषयं प्रमाणं वस्तुगोचरम् ।
साक्षात्कारं जनयतीत्येव हि तत्र निर्णयः ॥२७८॥

ब्रह्मसाक्षादपरोक्षं श्रुत्यैव सम्प्रगीयते ।
साक्षात्कारश्च तस्यापि वाक्यादेवाभ्युपेयताम् ॥२७९॥

कौन्तेयोऽसि न राधेय इति सूर्यस्य वाक्यतः ।
साक्षात्कारो यथा जातः कर्णस्य विभ्रमापहः ॥२८०॥
ज्ञानस्य सुखसाध्यत्वं भगवानर्जुनं प्रति ।
राजयोगाभिधानस्य माहात्म्यं तस्य चाब्रवीत् ॥२८१॥

सुखं कर्तुं ज्ञानं वदति भगवानक्षयफलं
सविद्यानां श्रेष्ठं सकलदुरितध्वंसकमिदम् ॥
प्रगुप्तानां श्रेष्ठं ह्यविदितमनेकैश्च पतितैः
प्रमाणात्प्रत्यक्षं ह्यथखलुफलाद्धर्मजनितम् ॥२८२॥

ज्ञानं न देशकालादिव्यवधानमपेक्षते ।
प्रमाणवस्तुतन्त्रत्वाद्विचारेण विना क्वचित् ॥२८३॥
गुरूपदर्शितेनैव विचारेण सह कृतात् ।
तत्त्वमस्यादिवाक्याद्धि कर्तुं सुखेन शक्यते ॥२८४॥
सर्वाविद्याविरोधित्वाद्राजविद्या तदुच्यते ।
बहुभिरविज्ञातत्वाद्राजगुह्यं तदुच्यते ॥२८५॥
सर्वपापविरोधित्वात्पवित्रमिदमुत्तमम् ।
प्रत्यक्षं फलमानाभ्यां निष्कामकर्मणः फलम् ॥२८६॥
गुरूपदेशमात्रेण कर्तुं शक्यं निरन्तरम् ।
अक्षयफलहेतुत्वाच्छ्रद्धेयं ज्ञानमेव हि ॥२८७॥
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
ममत्वभिमतः साधो सुसाध्यो ज्ञाननिश्चयः ॥२८८॥

इत्यादिवचनैः स्पष्टं राजयोगाभिधानकम् ।
अल्पायासेन साध्यं हि ज्ञानमेव सुनिश्चितम् ॥२८९॥
भूतभौतिकतन्मात्रेन्द्रियाहमादिगाचगः ।
सम्प्रज्ञातसविकल्पसमाधयः प्रपञ्चिताः ॥२९०॥
अन्तर्धानादिसिद्धीनां हेतुत्वात्तु विरोधिनः ।
परमात्मपदप्राप्तौ नाद्रियन्ते ततोबुधैः ॥२९१॥
निमन्त्रितोऽपि देवैश्च सङ्गं स्मयं परित्यजेत् ।
पुनरनिष्टमाप्नुयात्सहसा करणे तयोः ॥२९२
समाधौ विघ्नकारित्वं सिद्धीनामभ्यधाद्दृष्टिः ।
अणिमादावैश्वर्येऽत औत्सुक्यं नैव युज्यते ॥२९३॥
परिणामादिभिर्लिङ्गैः सर्वं दुःखं वदत्यसौ ।
पतञ्जलिर्यतस्तस्मादैश्वर्य औत्सुक्यं कुतः ॥२९४॥
ऐश्वर्येण प्रलोभितोऽपि नचिकेताः श्राद्धदेवेन सः
आज्ञायास्य च हेयतामुपरतस्तत्याज दोषैर्युतम् ॥
कालेनाथ हि संस्तुतो बहुतरं सम्प्रार्थितोऽपि भृशं
मोक्षे शाश्वति के प्रवृत्त इति च ब्रूते कठानां श्रुति ॥२९५॥
आत्मादर्शी ह्यसौ विद्वानणिमाद्यैश्वर्यान्वितः ।
भवत्येवेति कथनं नैव संगच्छते यतः ॥२९६॥
विषया ये दिव्यादिव्या योगस्यैव फलात्मिकाः ।
एताँस्त्यजन्नवाप्नोति प्रत्यक्षं ब्रह्मवेदनम् ॥२९७॥

सर्वसिद्धिपरित्यागादानन्दात्मानमद्वयम् ।
निरीक्ष्यैव कृतार्थः स्यात्कश्चिदेव पुमानिह ॥२९८॥

अणिमादावविघ्नोत्थे पराक्चित्ततया रताः ।
ततो भूयस्तमो यान्ति नैकात्म्यं ये विदुर्नराः ॥२९९॥

योगे सम्यक् प्रवृत्तस्य स्युश्चेद्विविधसिद्धयः ।
ब्रह्मात्मज्ञानविघ्नत्वादासक्तिं तत्र वर्जयेत् ॥३००॥

ब्रह्मैवास्मीति वाक्यार्थज्ञानाद्ब्रह्मतया स्थितिः ।
योगस्य परमासिद्धिः फलभूता ह्युदाहृता ॥३०१॥

अवान्तरास्तु ताः सिद्धिः कदर्यस्त्रीसमाः स्थिताः ।
हसन्तीं मुक्तिसिद्धिं तां प्राहुर्योगविदां वराः ॥३०२॥

स्वयम्प्रकाशमानाञ्च दुष्प्रापामकृतात्मभिः ।
आनन्दात्मेन्दुवदनां सुप्रपां संस्कृतात्मभिः ॥३०३॥

केचिदैश्वर्यसंसक्ता ज्ञानाभावान्महर्षयः ।
न मुक्तिं लेभिरे पश्चादैश्वर्यक्षयदर्शनात् ॥३०४॥

विरक्ता ज्ञाननिष्ठास्ते कैवल्यं प्रापुरञ्जसा ।
तेषां क्रममुक्तिं प्राह स्मृतिरपि स्फुटं यतः ॥३०५॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥३०६॥

इत्यादिवचनैः स्पष्टमैश्वर्यत्यागमन्तरा ।
दर्शनस्य जनिर्नैव सम्भवति कदाचन ॥३०७॥

ऐश्वर्यं त्याज्यमेवातो मुमुक्षोर्दर्शनार्थिनः ।
आत्मदर्शिनो विदुष ऐश्वर्यसम्भवः कुतः ॥३०८॥
सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमस्य हि ।
व्याख्यातारो वदन्त्यर्थं सूत्रस्य स हि लिख्यते ॥३०९॥
सत्यामेवान्यताख्यातौ सत्त्वपुरुषयोः किल ।
साक्षाद् भवति कैवल्यमन्यथा नैव कर्हिचित् ॥३१०॥
संयमानां प्रभावेणाणिमाद्यैश्वर्यभागिनः ।
अन्यस्य वापि कैवल्यमन्यताख्यातिशालिनः ॥३११॥
इति भाष्यकृदप्याह संयमिनोऽन्यस्यापि वा ।
कैवल्यकारणं स्पष्टं विवेकख्यातिमेव हि ॥३१२॥
इत्थमपि विदुष्यस्मिन्नैश्वर्यस्यान्वये किल ।
भवत्येवेत्यवधृतिः सर्वथा नोपपद्यते ॥३१३॥
विज्ञातस्वात्मतत्त्वस्य योगिनः सिद्धिगोपनात् ।
अगोपनान्नलाभादिर्मुक्त एव न संशयः ॥३१४॥

॥ इति तृतीयः प्रकाशः ॥

# चतुर्थ प्रकरण

कलौ योगादयः सिद्धिं न यान्त्येनःप्रभावतः ।
विचारैकपरस्तस्माज्जिज्ञासुः सर्वदा भवेत् ॥१॥

देहेन्द्रियादिरूपोऽहं किं वा तेभ्यो विलक्षणः ।
त्वं पदार्थविचारोऽयं संसारः केन हेतुना ॥२॥

समागतो ह्यधिष्ठाने विचारस्तत्पदार्थगः ।
न्यायेनेतिपरामर्शो विचार इति कथ्यते ॥३॥

कोऽहं कथमिदं जातं को वा कर्तास्य विद्यते ।
उपादानं किमस्तीह सदेव वाऽन्यदेव वा ॥४॥

नाहं भौतिकदेहादि किन्त्वेतस्माद्विलक्षणः ।
ब्रह्मैवाहं न सन्देहो ह्येकः सूक्ष्मः सदव्ययः ॥५॥

अज्ञानप्रभवं विश्वं ज्ञानेन प्रविलीयते ।
संकल्पो विविधः कर्ता ह्युपादानं सदेव हि ॥६॥

यथैव मृद्घटादीनां शुक्तिर्वा रजतस्य च ।
सर्पादीनां यथा रज्जुर्विचारो ह्येवमात्मकः ॥७॥

ऊहापोहात्मिका यद्वा क्रिया या मानसी मता ।
स विचार इति प्रोक्तः सर्वज्ञात्मानुसारिभिः ॥८॥

शब्दशक्तिविषयं निरूपणं
युक्तितः श्रवणमुच्यते बुधैः ॥

मूलकृद्भिरपि चेत्थमीरित-
मर्थतस्तु न भिदा तयोरिति ॥९॥

आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ।
इत्यादिस्मृतिवाक्येषु विचारो विहितोऽनिशम् ॥१०॥

विचारं हि परित्यज्य योगं यस्तु करोति तम् ।
पिण्डं समुत्सृज्य करं लेढीति न्याय आपतेत् ॥११॥

विचारेण विना ज्ञानं नोत्पद्यतेऽन्यासाधनैः ।
यथा पदार्थभानं हि प्रकाशेन विना क्वचित् ॥१२॥

ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः ।
निर्विकारो निराकारो निरवद्योऽहमव्ययः ॥१३॥

निरामयो निराभासो निर्विकल्पोऽहमाततः ।
निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोऽहमच्युतः ॥१४॥

निर्मलो निश्चलोऽनन्तः शुद्धोऽहमजरोऽमरः ।
नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः १५॥

हेतुर्ज्ञानस्य सम्प्रोक्तो विचारोऽन्यनिषेधतः ।
अतो विचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः ॥१६॥

वेदान्तशास्त्रार्थविचारतोऽनिशं
ज्ञानं यदाऽसंशयमत्र जायते ॥
संसारदुःखस्य निवृत्तिरुत्तमा
ज्ञानेन तेनैव भवेदनन्तरम् ॥१७॥

आत्मानात्मविवेकेन बोधवह्निः प्रजायते ।
अहङ्कारादिकार्यञ्च समूलं प्रदहेदयम् ॥१८॥

मोक्षस्यावाप्तये ज्ञेन ह्यात्मानात्मविवेचनम् ।
कार्यं स्वं सच्चिदानन्दं ततो विज्ञाय मुच्यते ॥१९॥

सर्वव्यापिनमात्मानमसंसारिणमीश्वरम् ।
साक्षात्कृत्य विवेकान्नो शोचत्यज्ञाननाशतः ॥२०॥

अविद्याकामकर्मादिमलेन परिवर्जितः ।
विज्ञातपरमार्थोऽसौ विवेकी मुक्तिमाप्नुयात् ॥२१॥

परमात्मानमात्मेति ये जानान्ति विवेकिनः ।
आनन्दात्मस्वरूपेण ह्यमृतास्ते भवन्ति हि ॥२२॥

अधिगतपरमार्थः क्षीणरागादिदोषः
सकलमलविकारोपाधिसङ्गाद्यपेतः ॥
हृदि चिरमनुभूतं ब्रह्मसौख्यं विवेकी
पदममलमनन्तं प्राप्तवान् वीतशोकः ॥२३॥

प्रवृत्तिः पुरुषस्यास्य मोक्षोपायविचारणे ।
यदा तदा भवत्याशु मोक्षभागी स ज्ञानतः ॥२४॥

विचारे प्रवृत्तौ सत्यां क्लेशः कोऽपि न जायते ।
केवलीभावसम्प्राप्तौ धनादिभिर्न प्राप्यते ॥२५॥

विचारात्तीक्ष्णतामेत्य धीः पश्यति परं पदम् ।
दीर्घसंसाररोगस्य विचारो हि महौषधम् ॥२६॥

अद्वितीयचिदानन्दब्रह्मात्मज्ञानजन्मने ।
न विचारं विना कश्चिदुपायोऽस्ति विपश्चिताम् ॥२७॥
युक्तायुक्तमहादीपं वाञ्छितज्ञानसाधकम् ।
स्फारं विचारमाश्रित्य संसारजलधिं तरेत् ॥२८॥
विवेकाम्भोजविच्छेदानज्ञानादिमतङ्गजान् ।
हन्ति विज्ञानद्वारेण विचारो नाम केसरी ॥२९॥
मूढाज्ञानवशेनेह यद्गताः परमं पदम् ।
तद्विचारप्रदीपस्य हि माहात्म्यमनुत्तमम् ॥३०॥
विचारकल्पवृक्षस्य शाश्वतं मुक्तिसंज्ञकम् ।
फलं विज्ञानद्वारेण प्रवदन्ति विपश्चितः ॥३१॥
या विचारेण जायन्ते मतयो महतामिह ।
न ता विपदि मज्जन्ति तुम्बकानीव वारिणि ॥३२॥
मनो विचारसंयुक्तमाशा वैवश्यवर्जितम् ।
परां निर्वृत्तिमभ्येति विज्ञानादेव स्वात्मनि ॥३३॥
संसारः स्वमनोमोहकल्पितो दुःखकारणम् ।
विचाराज्ज्ञानद्वारेण समूलं प्रविलीयते ॥३४॥
विचारेण विना भावा भान्ति सत्यतयापि च ।
विचारजन्यविज्ञानान्मिथ्याभूता विभान्ति ते ॥३५॥
पुंसो निजमनोमोहकल्पितोऽनल्पदुःखदः ।
संसारो ज्ञानद्वारेण विचारणे विनश्यति ॥३६॥

विचारजन्यया दृष्ट्या द्वैतत्यागेन राघव !
स्वरूपावस्थितिर्मुक्तिब्रह्मात्मज्ञैरवाप्यते ॥३७॥
समं सुखं निराबाधमनन्तमनपाश्रयम् ।
विद्धीमं केवलीभावं विचारोच्चतरोः फलम् ॥३८॥
स्वविचारमहौषध्या साधुचित्तनिषण्णया ।
अचलस्थितिदायिन्या कृतकृत्यो भवेत्सुधीः ॥३९॥
विचारजन्यज्ञानेन चित्तं चेन्नाशमाप्नुयात् ।
जीवनासम्भवो नोचेद्विक्षेपान् जनयेद्ध्रुवम् ॥४०॥
एवमाशङ्क्य ज्ञानेन चित्तमाभासतां गतम् ।
न नष्टं जीवनं सिद्धं विक्षेपो नाभ्युदेति नो ॥४१॥
भर्जितबीजवत्तेन महात्मानो महाशयाः ।
जीवन्मुक्ता जगत्यस्मिन्विचरन्तीह योगिनः ॥४२॥
देहेऽनुभूयमानो हि ब्रह्मात्मैकत्त्वलक्षणः ।
योगः स विद्यते येषां ते ह्यत्र योगिनो मताः ॥४३॥
वेदतात्पर्यविश्रान्तिभूमी च धर्मब्रह्मणी ।
प्रापिके पुरुषार्थस्य निर्णीयेते विचारतः ॥४४॥
विचारश्च प्रियो यस्य दिव्यचक्षुः स पूरुषः ।
आपदोऽभिभवत्याशु पुरुषार्थं प्राप्नोति च ॥४५॥
परमात्मन्यत्यासक्ता महानन्दैकदायिनी ।
क्षणमेकं परित्याज्या न विचारचमत्कृतिः ॥४६॥

विचारचारुपुरुषो महतामपि रोचते ।
ज्ञातब्रह्मात्मतत्त्वानां किं पुनरधिकारिणीम् ॥४७॥

विचारेणैव ज्ञाता यैरनुभवाध्वनि गतिः ।
लुठन्ति दुःखश्वभ्रेषु नानेकेषु पुनः पुनः ॥४८॥

नित्यं विचारयुक्तेन भवितव्यं महात्मना ।
रागादिकूपे पततां विचारो ह्यवलम्बनम् ॥४९॥

स्वयमेवात्मनात्मानं स्थिरीकृत्य विचारतः ।
संसारमोहजलधेस्तारयेत् स्वमनोमृगम् ॥५०॥

सत्यासत्यग्रहत्यागौ पश्यतामिह राघव !
न विचाराहते तत्त्वं किञ्चन सम्यग्ज्ञायते ॥५१॥

विचाराज्ज्ञायते तत्त्वं ततो विश्रान्तिरात्मनि ।
विश्रान्तेर्मनसि संस्थसर्वदुःखपरिक्षयः ॥५२॥

अध्यात्मविद्या विद्यानां प्रधानं तदुत्पत्तये ।
सच्छास्त्रसाधुसङ्गोत्थविचारो ह्युपयुज्यते ॥५३॥

स्वप्नादौ च स्थिते यद्वत् स्वप्नोऽयमिति बोधतः ।
स्वप्नसत्यत्वभावो यः सोऽस्तमेति न संशयः ॥५४॥

तथास्थितं जगद्दृश्यमस्तमेति विचारणात् ।
सदाविचारयेत्तस्मात्स्वप्नाभासां जगत्स्थितिम् ॥५५॥

बहुकालमियंरूढा मिथ्याज्ञानविषूचिका ।
नूनं विचारमन्त्रेण निर्मूलमुपशाम्यति ॥५६॥

अविचारेण भातीदं जगत्स्थावरजङ्गमम् ।
अविचारो विचारेण निमेषादेव नश्यति ॥५७॥
यथोदिते दिनकरे क्वापि याति तमस्विनी ।
तथा विवेकेऽभ्युदिते क्वाप्यविद्या विलीयते ॥५८॥
सम्यग्विचारणाभिश्च प्रत्यङ्मात्रे चिदात्मनि ।
दृष्टे ह्यवश्यहेयाया अविद्यायास्तरिष्यति ॥५९॥
शास्त्रसत्सङ्गमाभ्यासात्सविवेको जितेन्द्रियः ।
अत्यन्ताभावमेतस्य दृश्यस्याप्यवगच्छति ॥६०॥
विलीयते मनोमोहः सच्छास्त्रस्य विचारणात् ।
नभोविहरणाद्भानो शार्वरं तिमिरं यथा ॥६१॥
आत्मप्रदीपको येन विचारेण विनिश्चितः ।
जीवन्मुक्तगतिं प्राप्य स्वशरीरे विराजते ॥६२॥
साधनैस्तीक्ष्णीकृतया सहनशीलया धिया ।
प्रविचार्यात्मनस्तत्त्वं ततः स्वपदमाविशेत् ॥६३॥
तुच्छां तां जागतीं मायां दृष्ट्वा जीवो विचारवान् ।
अहङ्कारमयीं मायां त्यजत्यहिरिव त्वचम् ॥६४॥
स्वयमेव विचारेण विचार्यात्मानमात्मना ।
यावन्न ज्ञायते ज्ञेयं न तावदधिगम्यते ॥६५॥
विचारणावदातेन पश्यत्यात्मानमात्मना ।
ततो हि पदमाप्नोति तद्यत्परमपावनम् ॥६६॥

तावद्भवमहाम्भोधौ जनस्तृणवदुह्यते ।
विचारतटविश्रान्तिमेति यावन्न चेतसा ॥६७॥
विचारेण परिज्ञातवस्तुनोऽस्य जनस्य धीः ।
सर्वमानसदुःखानि भृशं नाशयति क्षणात् ॥६८॥
केचिदात्मविदो धन्याः साक्ष्यात्मा यैर्विचारितः ।
विच्छिन्नतृष्णानिगडा यान्ति तत्परमं पदम् ॥६९॥
विचारवैराग्यवता चेतसा गुणशालिना ।
देवं पश्यत्यथात्मानमेकरूपमनामयम् ॥७०॥
विचार्य प्रत्यगात्मानं परं ब्रह्मावलोक्य च ।
साक्षात्कारादुपयान्ति निर्मलां परमां गतिम् ॥७१॥
मनस्तुषारकणिका विवेकार्कातपेन मे ।
ब्रह्माणि सुप्रतिष्ठार्थमचिराल्लयमेष्यति ॥७२॥
सदा तेन विचारेण जनकस्य महीपतेः ।
ब्रह्माकारं सम्यग्ज्ञानं भृशं विमलतां ययौ ॥७३॥
स्वविचारवशादेव जनकेन महात्मना ।
प्राप्तव्यमखिलं प्राप्तं ज्ञानमात्रेण नान्यथा ॥७४॥
तावत्तावत्स्वकेनैव चेतसा प्रविचारयेत् ।
यावद्यावद्विचाराणां सीमान्तः समवाप्यते ॥७५॥
न तद्गुरोर्न शास्त्राच्च न पुण्यात्प्राप्यते पदम् ।
यत्साधुसङ्गमोत्पन्नाद्विचारात्समवाप्यते ॥७६॥

यस्योज्ज्वलति तीक्ष्णाग्रा पूर्वापरविचारणात् ।
प्रज्ञादीपशिखाऽज्ञानतमस्तस्य विनश्यति ॥७७॥

एवं जनकवद्राम ! विचार्यात्मानमात्मना ।
संशयादिनिरासेन स्वात्मानमवगच्छसि ॥७८॥

विवेकं परमाश्रित्य विलोक्यात्मानमात्मना ।
ततो ज्ञानाद्विरक्तोऽसौ संसारजलधिं तरेत् ॥७९॥

सुखदाज्ञानसम्प्राप्तिरज्ञानतरुनाशिनी ।
संसारकल्पना तस्या विचारेण विनश्यति ॥८०॥

विचाराच्छास्त्रतात्पर्यनिर्णयानन्तरं ध्रुवम् ।
सम्यग्ज्ञानेन परमपदप्राप्तिः प्रजायते ॥८१॥

सम्यगध्यात्मशास्त्रस्य विचारवशतः किल ।
यथा चामीकरप्राप्तिरात्मप्राप्तिस्तथा भवेत् ॥८२॥

भृशमेवाविवेकाभ्रमुदितं हृदयाम्बरे ।
विवेकपवनेनाशु दूरं नयति शुद्धधीः ॥८३॥

परमानन्दप्राप्त्यर्थं सर्वानर्थनिवृत्तये ।
ब्रह्मविश्रान्तिपर्यन्तो विचारो हरिणोच्यते ॥८४॥

साङ्ख्यनाम्ना विचारेण पश्यन्त्यात्मानमात्मनि ।
विचाराज्ज्ञानजन्मैवं भगवानाह च स्फुटम् ॥८५॥

चिरमाराधितोऽप्येष परमप्रीतिमानपि ।
नाविचारवतो ज्ञानं दातुं शक्नोति माधवः ॥८६॥

विचारेण परिज्ञात एतस्मिन्परमेश्वरे ।
समाप्नोति परानन्दः शाश्वतो मोक्षसंज्ञकः ॥८७॥

अज्ञानमुच्यते पापं तद्विचारेण नश्यति ।
पापमूलच्छिदं तस्माद्विचारं न परित्यजेत् ॥८८॥

मुख्यः पुरुषयत्नोत्थो विचारः स्वात्मदर्शने ।
गौणः किलापरो हेतुर्मुख्यहेतुपरो भवेत् ॥८९॥

पूर्वमेवबलात्तस्माद्वशीकृत्वेन्द्रियगणम् ।
अभ्यसन्सर्वयत्नेन चित्तं कुर्याद्विचारवत् ॥९०॥

विचारोपशमाभ्यां हि विनात्मानोपलभ्यते ।
ताभ्यां विना पुमानेष न किञ्चिल्लभते हितम् ॥९१॥

विचारोपशमोपेतं भृशं चित्तं प्रसीदति ।
तस्मिन्प्रसन्नतां याते ज्ञानान्मुक्तिमवाप्नुयात् ॥९२॥

दिष्ट्येदानीम्परिज्ञातो यथैषोऽज्ञानतस्करः ।
विवेकजेन बोधेन हन्त्येनमपकारिणम् ॥९३॥

वैराग्यादिक्रमेणैव विचार्यात्मानमात्मना ।
विश्रान्तिमेति वितते पदे परमपावने ॥९४॥

स्वचित्तशोधनेनाथ विश्वासेन गुरोर्गिरि ।
शास्त्रस्य श्रवणेनार्थतत्त्वपरीक्षणेन च ॥९५॥

सर्वदृश्यस्य बाधेन यावद्विश्रान्तिमेति हि ।
तावद्विचारः कर्तव्योऽवश्यमेव मुमुक्षुभिः ॥९६॥

विचारेण परिज्ञातस्वभावस्याधिकारिणः ।
हर्षामर्षदशाश्चेतो नैव कुर्वन्ति चञ्चलम् ॥९७॥
विचारजन्यया दृष्ट्या द्वैतत्यागेन राघव !
स्वरूपावस्थितिमुक्तिर्ब्रह्मात्मज्ञैरवाप्यते ॥९८॥
सत्यां प्रज्ञामहानावि विवेके सति नाविके ।
संसारसागरादस्माद्यो न तीर्णो धिगस्तु तम् ॥९९॥
अहो मोहस्य माहात्म्यं यदयं सर्वदुःखहा ।
चिन्तामणिर्विचाराख्यो हृत्स्थोऽपि त्यज्यते जनैः ॥१००॥
शान्तिदान्त्यादिसम्पन्नो वीतरागो विचारवान् ।
प्राप्नोति परमं ज्ञानं ज्ञानान्मुक्तिर्हि लभ्यते ॥१०१॥
सम्यग्विचारिणं प्राज्ञं यथार्थात्मावलोकिनम् ।
विभवा ब्रह्मलोकान्ता नैव प्रलोभयन्ति हि ॥१०२॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽथवा ।
न विचारपरश्चेतो यस्यासौ मृत उच्यते ॥१०३॥
प्रामादापहरेणाशु विचारेण परं पदम् ।
दृश्यते विमलं वस्तु प्रदीपेनेव भास्वता ॥२०४॥
सम्यक्शास्त्रविचारेण ब्रह्मतत्त्वं हि ज्ञायते ।
ज्ञानेन सर्वदुःखानां विनाश उपजायते ॥१०५॥
विचारोत्थात्मविज्ञानं ज्ञानमित्युच्यते बुधैः ।
सम्यग्ज्ञानसमालोकः पुमान्ज्ञेयसमः स्वयम् ॥१०६॥

गुरुभिः सह शास्त्राणि विचार्य मननादिना ।
आत्मतत्त्वं परिज्ञाय कैवल्यपदमाप्नुयात् ॥१०७॥
रामाविद्यालतामेतां प्ररूढां हृदयद्रुमे ।
विचारेणोत्थज्ञानासिपातैश्छिन्धि स्वमुक्तये ॥१०८॥
साक्षात्कारावधिस्वात्मविचारो दुःखनाशकः ।
दुःस्वप्नकल्पसंसारभ्रमस्यास्यापहारकः ॥१०९॥
यस्मादुत्पद्यते विश्वं स्थितिमाप्नोति यत्र च ।
यस्मिन्नेव लयं याति तं विचारेण पश्यति ॥११०॥
चित्ते शान्ते शाम्यतीयं संसारमृगतृष्णिका ।
विज्ञानोत्पत्तिपर्यन्तविचारात्तद्धि शाम्यति ॥१११॥

इत्थं विचारणपरः परमप्रबोधा-
बुद्ध्वा यथास्थितमिदं परमात्मतत्त्वम् ।
संशान्तरागभयमोहतमोविलासो
मुक्तो बभूव सुखरूपतया सदैव ॥११२॥

वायौ स्पन्द इवात्रेदं जगज्जीवादि भासते ।
कोऽहं कथमिदञ्चेति विचारेणैव शाम्यति ॥११३॥
कोऽहं कथमिदं दृश्यं को जीवः प्राणधारणात् ।
किञ्च तत्त्वज्ञसंयोगाद्यावन्मोक्षं विचारयेत् ॥११४॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
अविचारकृतो बन्धो मोक्षमेति विचारतः ॥११५॥

पूर्णे निरामये तत्त्वे सम्प्रबुद्धे विचारतः ।
मिथ्यैवेदं जगत्सर्वं कृतकृत्यो भवेत्सुधीः ॥११६॥

य एवं स्वविचाराख्यमभ्यासं न त्यजन्ति हि ।
संसारासारतां बुद्ध्वा मायानदीन्तरन्ति ते ॥११७॥

सच्छास्त्रस्य विचारेण साक्षात्कारोऽभिजायते ।
संसाराध्वश्रमहरोऽविलम्बेन न संशयः ॥११८॥

यद्धि नान्येन केनापि क्रियते सुकृतादिना ।
विचारेण परिज्ञातं शास्त्रं श्रेयः करिष्यति ॥११९॥

अज्ञानकल्पितो बन्धस्तत्वज्ञानेन नश्यति ।
ज्ञानोत्पत्तिर्विचारेण तस्मादात्मा विचार्यताम् ॥१२०॥

विचारामलया बुद्ध्या कल्पनामपहाय च ।
सच्चिदानन्दमात्मानं ज्ञात्वा मोक्षं स गच्छति ॥१२१॥

स्वं विविच्य तु संघाताद्विविक्तं ब्रह्मरूपतः ।
साक्षात्कृत्य परं ज्योतिस्तदेव प्रतिपद्यते ॥१२२॥

समाधिर्वाऽसमाधिर्वा कार्यमकार्यमस्ति नो ।
एवं विचार्य बुद्ध्वा च मन्यन्ते कृतकृत्यताम् ॥१२३॥

ब्रह्मात्मैकत्वविज्ञानं विवेकेनैव सिध्यति ।
ततो विवेकः कर्तव्यः प्रत्यगात्मसदात्मनोः ॥१२४॥

मोक्षस्यावाप्तये ज्ञेन ह्यात्मानात्मविवेचनम् ।
कार्यं स्वं सच्चिदानन्दं ततो विज्ञाय मुच्यते ॥१२५॥

आचार्यमतमाश्रित्य शुद्धात्मानं विचारयेत् ।
साक्षात्कारेण हि यावत्परं पदमवाप्नुयात् ॥१२६॥

विचारेणात्मनस्तत्त्वं विज्ञायानन्दचिद्घनम् ।
मिथ्याज्ञानं विधूयाथ कृतार्थो भवति सदा ॥१२७॥

विचारयन्तः प्रतिबन्धतोऽथ
यदा भवन्तीह न बोधभाजः ॥
तदा विधेर्लोकमुपागतास्ते
ज्ञात्वैव देवं हि भवन्ति मुक्ताः ॥१२८॥

नृणां ज्ञानैक निष्ठानामात्मज्ञानविचारिणाम् ।
सा जीवन्मुक्ततोदेति विदेहमुक्ततेव या ॥१२९॥

अविचारो भ्रमस्यास्य हेतुर्नान्योऽस्ति कश्चन ।
स च सम्यग्विचारेण निमेषादेव नश्यति ॥१३०॥

विचारेण यदाज्ञानं ब्रह्मात्मैकत्वगोचरम् ।
समुदेति तदा सर्वदुःखान्यस्तं प्रयान्ति हि ॥१३१॥

सम्यग्विचारतो दृष्टे शुद्धबोधसदात्मनि ।
संसारसागरोत्तीर्णः परां विश्रान्तिमाप्नुयात् ॥१३२॥

प्रविचार्यात्मनात्मानं दृष्टे तस्मिन् परावरे ।
पदं विदितवेद्यानामविघ्नेनाधिगच्छति ॥१३३॥

विवेकं परमाश्रित्य विलोक्यात्मानमात्मना ।
विरागयुक्तया बुद्ध्या संसारजलधिं तरेत् ॥१३४॥

स्वविचारसमुत्पन्नब्रह्मात्मतत्त्वबोधतः ।
अनर्थस्य निवृत्तिः स्यादानन्दावाप्तिरित्यपि ॥१३५॥
मुख्यो हेतुर्विचारोऽयं यस्माद्ब्रह्मात्मदर्शने ।
न ज्ञायते विचारेण विना हृत्स्थोऽपि चेतनः ॥१३६॥
विचारोपशमाभ्यां हि न विना ज्ञायते हरिः ।
ताभ्यामात्मानमालोक्य सन्तिष्ठत्यात्मनात्मनि ॥१३७॥
संसारतरणे नास्ति ज्ञानादितरसाधनम् ।
विचारात्प्राप्य विज्ञानं मोक्षं प्राप्नोति शाश्वतम् ॥१३८॥
अन्धकारहरेणाशु विचारेणापरोक्षतः ।
ज्ञायते विमलं वस्तु तेनाप्नोति परं पदम् ॥१३९॥
तेन शास्त्रविचारेण ब्रह्मतत्त्वं हि ज्ञायते ।
ज्ञानेन सर्वदुःखानां विनाश उपजायते ॥१४०॥
रक्तमांसास्थियन्त्रेऽस्मिन् कः स्यामहमितिस्वयम् ।
यावद्विचार्यते तावज्ज्ञानात्सर्वं विलीयते ॥१४१॥
अहं साक्षीति यो विविच्यैवं पुनः पुनः ।
स एव मुक्तः सो विद्वानिति वेदान्तडिण्डिमः ॥१४२॥
चिदाभासस्य जीवस्य संसारो नात्मवस्तुनः ।
इति बोधो भवेद्धिया लभ्यतेऽसौ विचारणात् ॥१४३॥
सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ।
जीवभावजगद्भावबाधे ब्रह्मैव शिष्यते ॥१४४॥

परोक्षाचापरोक्षा च विद्या द्वेधा विचारजा ।
तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥१४५॥
अयमात्मास्ति ब्रह्मेति वाक्यार्थे प्रविचारिते ।
ब्रह्मप्रत्यगभेदोऽयं साक्षान्निश्चीयतेऽञ्जसा ॥१४६॥
अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबन्धकः ।
ब्रह्मापरोक्षज्ञानं नो विचारेण विना नृणाम् ॥१४७॥
विचारेण विना नान्यत् साक्षात्कारस्य साधनम् ।
साक्षात्कारावसानं हि सर्वदैव विचारयेत् ॥१४८॥
विचारयुक्तचित्ते हि ब्रह्मैवास्मीति बोधतः ।
समूलं विनिवृत्तानि दुःखानि न भवन्ति च ॥१४९॥

यावद्विचारदहनेन समूलदाहं
दग्धा न जर्जरलतेव बलादविद्या ॥
शाखाप्रतानगहनानि बहूनि तावत्
नानाविधानि सुखदुःखवनानि सूते ॥१५०॥

अज्ञानमेवास्य हि मूलकारणं
संसारचक्रस्य मृषात्मनः किल ॥
विद्यैव तन्नाशविधौ पटीयसी
तस्माद्बुधो ज्ञानविचारवान्भवेत् ॥१५१॥

आत्मानात्मविचारेण विज्ञानं ब्रह्मगोचरम् ।
उत्पद्यतेऽथ तेनैवानन्दी भवति नान्यथा ॥

अविचारकृतो बन्धो विचारेण निवर्तते ।
तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥१५३॥

विचारेणात्मविज्ञानवन्तः शोचन्ति नो खलु ।
एवंविधात्मविज्ञानशून्याः शोचन्त्यहर्निशम् ॥२५४॥

विचारेणात्मनस्तत्त्वं विज्ञायानन्दचिद्घनम् ।
मिथ्याज्ञानं विधूयाथ कृतार्थो भवति सदा ॥१५५॥

ततो विचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः ।
विचाराद्बुद्धतत्त्वस्य पुनर्नैव समुद्भवः ॥१५६॥

आदाववान्तराद्वाक्यात् परोक्षधीरुत्पद्यते ।
विचारसहितात्तस्माज्जायते ह्यपरोक्षधीः ॥१५७॥

जन्मादिकारणत्वाख्यलक्षणवाक्यतो भृगुः ।
ज्ञात्वापरोक्षतो ब्रह्म विचाराद्व्यक्तिमैक्षत ॥१५८॥

तैत्तरीयश्रुतावेवं परोक्षज्ञानपूर्वकम् ।
विचाराज्जायमानत्वं साक्षात्कारस्य दर्शितम् ॥१५९॥

छान्दोग्यप्रमुखास्वेव मितरासु श्रुतिष्वपि ।
अवान्तरेण वाक्येन प्रोक्ता ब्रह्मापरोक्षधीः ॥
सर्वत्रैव महावाक्यविचारादपरोक्षधीः ॥१६०॥

महावाक्यविचारस्य ब्रह्मापरोक्षहेतुता ।
विमतेर्हि निरासाय वाक्यवृत्तौ प्रकीर्तिता ॥१६१॥

उपपादनमेतस्य ह्यर्थस्य तृप्तिदीपके ।
पञ्चदश्यां कृतं सम्यगत्युद्घोषपुरस्सरम् ॥१६२॥
परोक्षज्ञानस्योत्पत्तावश्रद्धाप्रतिबन्धका ।
आप्तोपदेशमात्रेण श्रद्धालोस्तद्धि जायते ॥१६३॥
अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबन्धकः ।
तन्निवृत्तिं विना नैव जायते ह्यपरोक्षधीः ॥१६४॥
विचारेण विना तस्य निवृत्तिर्नोपपद्यते ।
ततो विचारः कर्तव्योऽपरोक्षज्ञानजन्मने ॥१६५॥
दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छाशीतिफलं लभेत् ॥१६६॥
इत्यादिवचनैः सम्यग्विचाराच्छुद्धमानसः ।
जिज्ञासुर्लभतेज्ञानं ततो बन्धस्य संक्षयः ॥१६७॥
आत्मदर्शनमुद्दिश्य साक्षात्कारात्मकं हि यत् ।
विचारं विदधातीह श्रोतव्य इति हि श्रुतिः ॥१६८॥
तामेव विषयीकृत्य वेदान्तशास्त्रस्यादिमम् ।
अथातो ब्रह्मजिज्ञासा इति सूत्रं प्रवर्तते ॥१६९॥
विचारो ब्रह्मज्ञानाय कर्तव्य इति वाक्यतः ।
तस्यार्थः कथितः सद्भिः श्रुतेरर्थानुसारतः ॥१७०॥

यो नित्यनित्यश्च चितिश्चितीना-
मेको बहूनाञ्च ददाति कामान् ।

तं कारणं शास्त्रविचारगम्यं
ज्ञात्वा हि देवं खलु पाशमोक्षः ॥१७१॥
अरूपिणं नेन्द्रियगोचरं परं
विचारसम्भावितमेकलक्षणम् ॥
विकल्पनाशून्यमतिप्रकाशितं
ब्रह्मैव पश्यन्ति भवन्ति तेऽमृताः ॥१७२॥
अज्ञानमुत्तमदृशां पुनरेकमेव
संसारमूलमपवर्गफला च विद्या ॥
वेदान्तवाक्यविषयश्रवणादिकञ्च
तस्या हि साधनतया करणीयमेव ॥१७३॥
अज्ञानसंशयविपर्ययरूपकाणि
ब्रह्मात्मबुद्धिजनकप्रतिबन्धकानि ॥
तत्त्वं पदार्थविषयाणि निवर्त्तयन्ति
ह्यवृत्तिमन्ति मननश्रवणादिकानि ॥१७४॥
श्रवणेन हि सम्पन्ना ब्रह्मलोकेऽत्र वापि च ।
साक्षात्कुर्वन्ति तद्ब्रह्म ह्यमृतं यतयोऽमलाः ॥१७५॥
ब्रह्मज्ञानसमुत्पत्तावुपायः श्रवणं ततः ।
नियतः सर्वपक्षेषु तृप्तौ यद्वद्धि भोजनम् ॥१७६॥
अनेकजन्मसु भक्त्या स्वविचारं चिकीर्षति ।
विचारेण विनष्टायां मायायां शिष्यते स्वयम् ॥१७७॥

॥ इति चतुर्थः प्रकाशः ॥

## ।। पंचमः प्रकाशः ।।

कलौ तु भक्तिः परमेश्वरस्य
विघ्नापनोदश्च विधाण द्वारम् ॥
ससाधनज्ञानजनौविनेशाः
एकैव बीजं न किलान्यदस्ति ॥१॥

मनसः श्रीकृष्णाकारा या द्रवाभावपूर्विका ।
वृत्तिर्भक्तिरिति प्रोक्ता शास्त्रतात्पर्यवित्तमैः ॥२॥
अनपेक्ष्य द्रवीभावं सदद्वितीयगोचरा ।
ज्ञानमित्युच्यते सद्भिर्वेदविद्भिर्विचक्षणैः ॥३॥
द्रुतं चित्तं हि गृह्णाति पदार्थाकारतां किल ।
द्रवीभावं विना नैव लाक्षाहिङ्गुलरङ्गवत् ॥४॥
द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्य वस्तुनः ।
स एव भावनाभाववासनाशब्दभाग्भवेत् ॥५॥

कलौ न योगो न जपस्तपो व्रतं
न चापि यागो न सुरार्चनं तथा ॥
प्रयान्ति सिद्धिं दुरितप्रभावत--
स्ततो मुकुन्दैकपरायणो भवेत् ॥६॥
रामेति वर्णद्वयमादरेण
सदा स्मरन् मुक्तिमुपैति जन्तुः ॥

कलौ युगे कल्मषमानसाना-
मन्यत्र धर्मे खलु नाधिकारः ॥७॥
रामनाम्नैव मुक्तिः स्यात् कलौ नान्येन केनचित् ।
रामनाम जपेत्तस्मात् सर्वदा मनुजः कलौ ॥८॥
रामरामेति ये नित्यं जपन्ति मनुजा भुवि ।
तेषां मृत्युभयादीनि न भवन्ति कदाचन ॥९॥
हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥१०॥
ध्यायन् कृतौ यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥११॥
कलेर्दोषनिधेरस्य किलास्त्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य बन्धमुक्तो भवत्यनु ॥१२॥
कलेरत्यन्तदुष्टस्य ह्ययमेको महान् गुणः ।
शार्ङ्गिणः कीर्त्तनादेव मुक्तबन्धः परं व्रजेत् ॥१३॥
कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥१४॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्वृकैरिव ॥१५॥
यन्नाम कीर्तितं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥१६॥

यज्ञैर्यज्ञविदो यजन्ति सततं यज्ञेश्वरं कर्मिणो ।
यं यं ब्रह्ममयं परापरपरं ध्यायन्ति च ज्ञानिनः ॥
यं सम्प्राप्य न जायते न म्रियते नो वर्धते हीयते ।
नूनं सर्वमघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥१७॥
इत्यादिवचनैः स्पष्टं कलौ भक्त्येकनिष्ठता ।
श्रेयोऽर्थिभिः सदा कार्याऽङ्गैः सह ज्ञानजन्मने ॥१८॥
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥१९॥
कव्यं यः पितृरूपधृग्विधिहुतं हव्यञ्च भुङ्क्ते विभु-
र्देवत्वे भगवाननादिनिधनः स्वाहास्वधासंज्ञितः ॥
यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां ।
निष्ठायै प्रभवन्ति हन्ति कलुषं श्रोत्रं प्रयातो हरिः ॥२०॥
यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने ।
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ॥
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययो ।
भक्तानां शरणं स मेऽस्तु हरिरित्येवं सदा प्रार्थयेत् ॥२१॥
किं वेदैः किमु शास्त्रैश्च पुराणैः स्मृतिभिश्च किम् ।
भगवच्छरणं यावन्न व्रजतीह पूरुषः ॥२२॥

श्रेयः सृतिं भक्तिमुदस्यते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ॥

तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम् ॥२३॥
भक्त्या हि लभ्यते तत्त्वज्ञानं तेनाचलं ध्रुवम् ।
सदैकरूपमानन्दं वासुदेवं प्रपद्यते ॥२४॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं निःश्रेयसकरम् ॥२५॥
तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥२६॥
नष्टप्राये च संसारे नित्यं सतां हि सेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥२७॥
ततो रजस्तमोभावाः कामक्रोधादयश्चये ।
चित्तमेतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥२८॥
एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥२९॥
विज्ञानात् संसृतिदुःखं समूलमेव नश्यति ।
ततो विशुद्ध आत्मायं मुक्तरूपोऽवतिष्ठते ॥३०॥
अनर्थोपशमं ह्येवं भक्तियोगं परेश्वरे ।
लोकस्याजानतो व्यासश्चक्रे श्रीमद्भागवतम् ॥३१॥
यस्मिन्वै श्रूयमाणे हि कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः शोकमोहजरापहा ॥३२॥

जन्मगुह्यं भगवतो य एतत्प्रयतो नरः ।
सायं प्रातर्गृणन्भक्त्या सर्वपापाद्विमुच्यते ॥३३॥
तस्यैवमनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य शान्तस्य दान्तस्य चामृतार्थिनः ॥३४॥
ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम् ।
अन्ववोचन्महर्षयः कृपया दीनवत्सलाः ॥३५॥
येनैवायं भगवतो वासुदेवस्य वेधसः ।
मायानुभावं जानाति येन गच्छति तत्पदम् ॥३६॥
भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले ।
पश्यति पुरुषं पूर्णं मोक्षमाप्नोति यद्धिया ॥३७॥
भक्त्याऽऽवेश्य मनो यस्मिन्वाचा यन्नामकीर्तयन् ।
त्यजन्कलेवरं भक्तो मुच्यते कामकर्मभिः ॥३८॥
अथाप्येकान्तभक्तेष्वहो माधवानुकम्पितम् ।
म्रियमाणस्य भक्तस्य यद्दर्शनं ददाति सः ॥३९॥
एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ।
सौहार्देनातिगाढेन शान्तासीद्विमला मतिः ॥४०॥
वासुदेवाङ्घ्र्यनुध्यानपरिबृंहितरंहसा ।
भक्त्या निर्मथिताशेषकषायाधिषणोऽर्जुनः ॥४१॥
गीतं भगवता ज्ञानं तेन संग्राममूर्धनि ।
विशोको ब्रह्मसम्पत्त्या संच्छिन्नाद्वैतसंशयः ॥४२॥

अकामो वा निष्कामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥४३॥
तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ।
तस्मिन्नारायणपदे ह्येकान्तमतयो गतिम् ॥
अवापुर्दुरवापां ते ह्यसद्भिर्विषयात्मभिः ॥४४॥

पानेन कृष्णस्य कथासुधायाः
प्रवृद्धभक्त्याः विमलाशया ये ॥
ते नित्ययुक्ताः समुपासते तं
यथाऽञ्जसान्वीयुरधोक्षजं तम् ॥४५॥

तथापरेऽव्यक्तमचिन्त्यरूप-
मुपास्य कूटस्थमजं ह्यसङ्गम् ॥
तमेव धीराः पुरुषं विशन्ति
तेषां श्रमः स्यान्न तु सेवयास्य ॥४६॥

अशेषसंक्लेशशमं विधत्ते
गुणानुवादश्रवणं मुरारेः ॥
कुतः पुनस्तच्चरणारविन्द-
परागसेवारतिरात्मलब्धा ॥४७॥

ये पद्मनाभचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।

भक्त्या गृहीतचरणः परया च तेषां
नापैति सोऽपि हृदयाम्बुरुहात्स्वपुंसाम् ॥४८॥

तावद्भयं द्रविणगेहसुहृन्निमित्तं
शोकः स्पृहा परिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्तिमूलं
यावन्न कृष्णचरणं प्रवृणीतलोकः ॥४९॥

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन युक्तात्मा मुक्तबन्धनः ॥५०॥

इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।
भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥५१॥

न क्रियमाणया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था कृतिनां ब्रह्मबुद्धये ॥५२॥

त्यक्त्वान्यसाधनं यज्ञपुरुपं विश्वतोमुखम् ।
भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारयेत् ॥५३॥

एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्तियोगेन यन्मनो माधवेऽर्पितम् ॥५४॥

तद्भक्तः प्रतिबुद्धार्थस्तत्प्रसादेन भूयसा ।
निश्रेयसं स्वसंस्थानं कैवल्याख्यं प्रपद्यते ॥५५॥

स एव भक्तियोगश्च ह्यात्यन्तिक उदाहृतः ।
येनातिक्रम्य त्रिगुणं तद्भावायोपपद्यते ॥५६॥

धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकमेव हरेस्तत्र कारणं पादसेवनम् ॥५७॥
यः स्वधर्मेण तं नित्यं निराशीः श्रद्धयान्वितः ।
भजेत शनकैस्तस्य मनोऽत्यन्तं प्रसीदति ॥५८॥

स प्रत्यगात्मनि तदा भगवत्यनन्ते
आनन्दमात्र उपपन्नसमस्तशक्तौ ॥
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यति ममाहमिति प्ररूढाम् ॥५९॥

सर्वात्मन्यच्युते तस्मिन् तीव्रौघां भक्तिमुद्वहन् ।
पश्यत्यात्मनि भूतेषु तमेवावस्थितं विभुम् ॥६०॥
परित्यक्तगुणः सम्यग्दर्शनो विमलाशयः ।
स्वात्मना समवस्थानं ब्रह्मकैवल्यमश्नुते ॥६१॥

यत्पादसेवाभिरुचिस्तपस्विना-
मशेषजन्मोपचितं मलं धियः ॥
सद्यः क्षिणोत्यन्वहमेधती सती
यथा पदाङ्गुष्ठविनिस्सृता सरित् ॥६२॥

विनिर्धुताशेषमनोमलः पुमान्
असङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनश्च वै
न संसृतिं क्लेशवहां प्रयाति सः ॥६३॥

भगवद्धर्मिणः साधोः श्रद्धया यततः सदा ।
भक्तिर्भगवति ब्रह्मण्यनन्यविषया भवेत् ॥६४॥

तस्यानया भगवतः परिकर्मशुद्ध-
सत्त्वात्मनस्तदनु संस्मरणानुपूर्त्या ॥
ज्ञानं विरक्तिमदभून्निशि तेन येन
चिच्छेद संशयपदं निजजीवकोशम् ॥६५॥

यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ।
असौ भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् ॥६६॥

प्रीतिर्न यावत्परमेश्वरे स्या-
न्मुच्येत तावन्न शरीरयोगात् ॥
शरीरयोगस्य हि मोचनार्थी
परेश्वरे प्रीतिमतश्च कुर्यात् ॥६७॥

संसारसिन्धोर्हि तितीर्षुरस्मात्
संन्यस्तदण्डः कृतभूतमैत्रः ॥
असज्जितात्मा हरिसेवयाग्र्यं
ज्ञानासिमादाय तरेद्धि पारम् ॥६८॥

प्रभावाद्भगवद्भक्तेर्ब्रह्मात्मानुभवादिह ।
पालयत्यवनिं विद्वान्निरभिमान एव हि ॥६९॥

एतावतालमघनिर्हरणाय पुंसां
सङ्कीर्त्तनं भगवतो गुणकर्मनाम्नाम् ॥

आक्रुश्य पुत्रमघवान्यदजामिलोऽपि
नारायणेति म्रियमाण इयाय मुक्तिम् ॥७०॥

नामोच्चारणमाहात्म्यं हरेः पश्यत कोविदाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥७१॥

निशम्य कर्माण्यसमान्गुणाँस्तथा
वीर्याणि लीलातनुभिः कृतानि च ।
यदातिहर्षोत्पुलकाश्रगद्गदं
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥७२॥

यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ॥
मुहुः श्वसन्वक्ति हरे ! जगत्पते !
नारायणेत्यात्ममतिर्गतत्रपः ॥७३॥

तदा पुमान्मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशया कृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥७४॥

अधोक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम् ॥
तद्ब्रह्मनिर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ॥७५॥

एवं हि लोकाः क्रतुभिः कृता अमी
क्षयिष्णवः सातिशया न निर्मलाः ॥
तस्माददृष्ट श्रुतदूषणं हरिं
भक्त्यैकयेशं भजतात्मलब्धये ॥७६॥

देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन्मुकुन्दचरणं स्वस्तिमान्स्यात्सुनिश्चितम् ॥७७॥

अन्योपायेन केनापि प्रीतिमाप्नोति नेश्वरः ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥७८॥

एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत्सर्वत्र परीक्षणम् ॥७९॥

वासुदेव भगवति सर्वात्मनि परेऽमले ।
एकान्तभक्तियोगेन सर्वभूतसुहृत्समः ॥८०॥

विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन्वृत्तिमात्मनः ॥८१॥

आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ।
विचरति महीमेतां जडान्धबधिराकृतिः ॥८२॥

पुरेह विष्णु बहवोऽपि योगिन-
स्तदर्पितेहा निजभाग्यलब्धया ॥
विबुध्य भक्त्यैव कथोपनीतया
प्रपेदिरे कैटभजिद्गतिं पराम् ॥८३॥

श्रवणादिकं शमदमादिपरः
परमात्मनः परमभागवतः ।
कुरुते यदा परममेव पदं
परमात्मनस्तदवलोकयति ॥८४॥

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥८५॥

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेम मैत्री दयोपेक्षा यः करोति स मध्यमः ॥८६॥

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥८७॥

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य नित्यं
ततः परां शान्तिमुपैति साक्षात् ॥८८॥

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
चेतोमलानि विधमेद्गुणकर्मजानि ॥
तस्मिन्विशुद्ध उपलभ्यतआत्मतत्त्वं
साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः ॥८९॥

देवर्षिभूताप्तनृणां पितॄणां
न किङ्करो नायमृणी मनुष्यः ॥

सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कर्तम् ॥९०॥

स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चित्
धुनोति सर्वं हृदि सन्निविष्टः ॥९१॥

वैरेण यं नृपतयः शिशुपालपौण्ड्र-
शाल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥९२॥

यानीशचरितानीह मनुष्याः साधवः कलौ
शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ ॥९३॥

नताः स्म ते नाथ ! पदारविन्दं
देहेन्द्रियप्राणमनोवचोभिः ॥
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तै-
र्मुमुक्षुभिर्बन्धविमोक्षणाय ॥९४॥

सत्सङ्गलब्धया भक्त्या समुपास्य महेश्वरम् ।
तस्य तत्पदमाप्नोति सद्भिर्यत्सम्यग्दर्शितम् ॥९५॥

यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेद्विष्णुं तदानन्त्याय कल्पते ॥९६॥

इष्टापूर्तेन गोविन्दं यो यजेत समाहितः ।
लभते तस्मिन्सद्भक्तिं ययाऽऽप्नोति परं पदम् ॥९७॥

प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव !
नोपायो विद्यते सम्यगाप्नोति येन मामयम् ॥९८॥

यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥९९॥

केवलेन हि प्रेम्णैव गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥१००॥

यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥१०१॥

भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ।
मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥१०२॥

यथाऽग्निना हेम मलं जहाति
ध्मातः पुनः स्वं भजते स्वरूपम् ।
आत्मा च कर्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥१०३॥

यथा यथा वै परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥१०४॥

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥१०५॥

प्रोक्तेन भक्तियोगेन भजतो मामसकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥१०६॥

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
यत्कर्मभिर्यत्तपसा यच्च देवार्चनादिना ॥१०७॥

योगेन दानधर्मेण श्रेयोभिरितरैरपि ।
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ॥१०८॥

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥१०९॥

भक्तियोगं स लभते एवं यो हि यजेत माम् ।
मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ॥११०॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यप्लवो भगवतः पुरुषोत्तमस्य ॥
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद्विविधदुःखदवार्दितस्य ॥१११॥

भक्तिं लब्ध्वा पुमानेष ह्यात्मारामो भवेदिह ।
भजनीयः स भगवान् ददात्यनुभवं यतः ॥११२॥

भक्तस्तरति संसाराल्लोकाँश्च तारयत्यपि ।
न शोचति न च द्वेष्टि न किञ्चिदपि वाञ्छति ॥११३॥

नित्यमेव च तृप्तः सन्नमृतो भवति किल ।
नारदो भगवानाह भक्तेस्तु मुक्तिहेतुताम् ॥११४॥
भक्तेस्तु मुक्तिहेतुत्वं साक्षाद्यत्तु श्रुतं क्वचित् ।
ज्ञानद्वारेण तन्नेयं बहुवाक्यानुसारतः ॥११५॥

भक्तिः प्रसिद्धा भवमोक्षणाय
नान्यत्ततः साधनमस्ति किञ्चित् ।
श्रीरामचन्द्रे सकलेश्वरे वै
भक्तिर्दृढा नौस्तरणार्थिनो हि ॥११६॥

वदन्ति रामं परमेकमाद्यं
निरस्तमायागुणसम्प्रवाहम् ।
भजन्ति चाहर्निशमप्रमत्ताः
परं पदं यान्ति हि ज्ञानतत्त्वाः ॥११७॥

भक्तिं विधाय तद्भक्तस्तद्भावायोपपद्यते ।
संसारामयतप्तानां भेषजं भक्तिरेव हि ॥११८॥
तद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम् ।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥११९॥

यत्पादपङ्कजपरागसुरागयोगि-
वृन्दैर्जितं भवभयं जितकालचक्रैः ।
यन्नामकीर्तनपराजितदुःखशोकाः
देवास्तमेव शरणं सततम्प्रपद्ये ॥१२०॥

एवं सम्प्रार्थ्यमानः सन् भक्तानां ज्ञानदायकः ।
ज्ञानाच्च दुःखहानेश्च भजनीयो महेश्वरः ॥१२१॥

तस्यैवं हि प्रसादेन सञ्जातज्ञानखड्गतः ।
बन्धोऽयं शक्यते छेत्तुं नान्योपायशतैरपि ॥१२२॥

सत्सङ्गलब्धया भक्त्या यदा तं समुपासते ।
तदा मायां तरन्त्येव प्राणिनस्तत्प्रसादतः ॥१२३॥

यतस्तज्ज्ञानसम्पन्नः सद्गुरुस्तेन लभ्यते ।
वाक्यज्ञानं गुरोर्लब्ध्वा तत्प्रसादाद्विमुच्यते ॥१२४॥

तस्मात्तद्भक्तिहीनानां कल्पकोटिशतैरपि ।
न मुक्तिशङ्का विज्ञानशङ्का नैव सुखं तथा ॥१२५॥

तत्पादभक्तियुक्तानां विज्ञानं भवति क्रमात् ।
तस्मात्तद्भक्तियुक्ता ये मुक्तिभाजस्त एव हि ॥१२६॥

तद्भक्तिनिरता ये तु विद्याभ्यासरताश्च ये ।
विद्या प्रादुर्भवेत्तेषां नेतरेषां कदाचन ॥१२७॥

अतस्तद्भक्तिसम्पन्ना मुक्ता एव न संशयः ।
तद्भक्त्यमृतहीनानां मोक्षः स्वप्नेऽपि नो भवेत् ॥१२८॥

सत्सङ्गमो भवेद्यर्हि तत्कथाश्रवणे रतिः ।
समुदेति ततो भक्तिस्तस्मिन् रामे सनातने ॥१२९॥

तद्भक्तावुपपन्नायां विज्ञानं निश्चयात्मकम् ।
उदेति मुक्तिमार्गोऽयमाद्यश्चतुरसेवितः ॥१३०॥

शास्त्राचार्योपदेशेन जीवात्मपरमात्मनोः ।
भवेद्यदैक्यविज्ञानं मूलाऽविद्या विनश्यति ॥१३१॥

सावस्था मुक्तिरित्युक्ता विना भक्तिं सुदुर्लभा ।
मोक्षमिच्छन्नतो नित्यं रामे भक्तिं समाश्रयेत् ॥१३२॥

भक्तौ सञ्जातमात्रायां तत्त्वानुभवस्तदा ।
तदनुभवसिद्धस्य मुक्तिस्तत्रैव जन्मनि ॥१३३॥

विष्णोर्हि भक्तिः सुविशोधनं धिय-
स्ततो भवेज्ज्ञानमतीव निर्मलम् ।
पूर्णाद्वयानन्दपरात्मगोचरं
ततश्च विद्वान् परमं पदं व्रजेत् ॥१३४॥

रामं परात्मानमभावयन् जनो
भक्त्या हृदिस्थं सुखरूपमद्वयम् ।
कथं परं तीरमवाप्नुयाज्जनो
भवाम्बुधेर्दुःखतरङ्गमालिनः ॥१३५॥

यन्नामसंस्मरणधूतसमस्तपापा-
स्तापत्रयानलमपीह तरन्ति सद्यः ।
तत्पादपद्मयुगलं तुलसीदलाद्यैः
सम्पूज्य विष्णुपदवीमतुलां प्रयान्ति ॥१३६॥

श्रीरामपादसद्भक्तिनिःश्रेणी प्राप्य बुद्धिमान् ।
समारोहति ज्ञानाख्यं सौधं तस्य प्रसादतः ॥१३७॥

ज्ञात्वा तं निर्गुणमजं वैष्णवं पदमश्नुते ॥१३८॥

भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी ।
भक्तिहीनेन यत्किञ्चित्कृतं सर्वमसत्समम् ॥१३९॥

भक्त्या परमया युक्तो मुच्यते नात्र संशयः ॥१४०॥

रामं भजन्ति निपुणा मनसा वचसाऽनिशम् ।
अनायासेन संसारं तीर्त्वा यान्ति हरेः पदम् ॥१४१॥

ये राममेव सततं भुवि शुद्धसत्त्वाः
ध्यायन्ति तस्य चरितानि पठन्ति सन्तः ।
मुक्तास्त एव भवदुःखमहाहिपाशैः
सीतापतेः पदमनन्तसुखं प्रयान्ति ॥१४२॥

न च यज्ञतपोभिर्वा न दानाध्ययनादिभिः ।
शक्यते भगवान्द्रष्टुमुपायैरितरैरपि ॥१४३॥
तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः ।
शक्यते भगवान्द्रष्टुं वेदान्तामलदृष्टिभिः ॥१४४॥

स शुद्धबोधोऽस्ति हि सर्वदेहिना-
मात्मास्त्यधीशोऽस्ति निराकृतिः स्वयम् ।
प्रतीयते ज्ञानदृशां महात्मनां
पादाब्जभृङ्गाहितसङ्गसङ्गिनाम् ॥१४५॥

यावन्न पश्येदखिलं तदात्मकं
तावत्तदाराधनतत्परो भवेत् ।

श्रद्धालुरत्यूर्जितभक्तिलक्षणो
यस्तस्य दृश्यो भगवान् सदा हृदि ॥१४६॥

अपारसंसारसमुद्रमध्ये
निमज्जतो मे शरणं किमस्ति ।
गुरो कृपालो कृपया वदैतद्
विश्वेशपादाम्बुजदीर्घनौका ॥१४७॥

तदेवमतिदुःखानामास्पदेऽत्र भवार्णवे ।
पुंसां हि कथ्यते सत्यं विष्णुरेकः परायणम् ॥१४८॥

भगवतः परं रूपं तन्नजानाति कश्चन ।
अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः ॥१४९॥

तदाराध्य परं ब्रह्म मुक्तिं याता मुमुक्षवः ।
वासुदेवमनाराध्य को मोक्षं समवाप्स्यति ॥१५०॥

तमाराध्य हरिं देवं मुक्तिं प्राप्नोति दुर्लभाम् ।
परं ब्रह्म परं धाम योऽसौ ब्रह्म तथाऽपरम् ॥१५१॥

तमाराध्य नरो मुक्तिमवाप्नोत्यविलम्बितम् ।
तस्मिन्नर्पितचित्तोऽसौ किमु स्वर्गादिकं फलम् ॥१५२॥

धर्ममर्थञ्च कामञ्च मोक्षञ्चान्विच्छता सदा ।
आराधनीयो भगवाननादिपुरुषोत्तमः ॥१५३॥

तदेतत्कथितं सत्यं नैवानृतं कथञ्चन ।
भगवत्प्रीतये विष्णुः स्मर्तव्यो बन्धमुक्तिदः ॥१५४॥

प्रतिमास्वपि दैत्यारेर्बुद्धयः शास्त्रचोदिताः ।
येन केन प्रकारेण स्मर्तव्यो जगतां पतिः ॥१५५॥

आयासः स्मरणे कोऽस्य स्मृतो यच्छति श्रेयसम् ।
पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥१५६॥

सर्वभूतहिते तस्मिन्भगवति परात्मनि ।
भक्तिर्हि जायमाना सा सर्वान्क्लेशान्प्रहास्यति ॥१५७॥

या निर्वृतिर्हि मोक्षाख्या नित्या चात्यन्तनिर्मला ।
तामाप्नोत्यमलं न्यस्य हृदयं केशवे नरः ॥१५८॥

असारसंसारसमुद्रमध्ये
मा यात तोषञ्च हितं ब्रवीमि ।
सर्वत्र शिष्याः समतामुपेत
समत्वमाराधनमच्युतस्य ॥१५९॥

तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं
धर्मार्थकामैरलमाप्तकामे ।
समाश्रिताद्ब्रह्मतरोरनन्ता-
न्निस्संशयं प्राप्स्यथ मुक्तिसौख्यम् ॥१६०॥

सम्पदैश्वर्यमाहात्म्यसन्ततिः ज्ञानकर्मणाम् ।
विमुक्तेश्चैव सर्वस्य मूलमाराधनं हरेः ॥१६१॥

आराधने यतितव्यं निर्वाणमपि चेच्छता ।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥१६२॥

आराधितः स भगवाननादिः पुरुषोत्तमः ।
प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ॥१६३॥

समस्तजगतां मूले यस्य भक्तिर्दृढाच्युते ।
धर्मार्थकामैः किन्तस्य मुक्तिस्तस्य करे स्थिता ॥१६४॥

माधवे निश्चलं चेतो यस्य भक्तिसमन्वितम् ।
स तस्यैव प्रसादेन निर्वाणं परमाप्स्यति ॥१६५॥

कर्माण्यसङ्कल्पिततत्फलानि
समर्प्य विष्णौ परमात्मरूपे ॥
अवाप्य ज्ञानं भगवत्यनन्ते
तस्मिन् लयं ते त्वमलाः प्रयान्ति ॥१६६॥

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥१६७॥

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥१६८॥

प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयान्नरः ॥१६९॥

विष्णुसंस्मरणक्षीणसमस्तक्लेशसञ्चयः ।
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नः प्रतीयते ॥१७०॥

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
कर्मसु तन्मनस्तस्य मुक्तिबीजमनुत्तमम् ॥१७१॥

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो भुवि ।
स याति परमं शुद्धं संक्षीणाखिलपातकः ॥१७२॥

समस्तभूतादचलादनन्तात्
सर्वेश्वरादन्यदनादिमध्यात् ।
यस्मान्न किञ्चित्तमचिन्त्यशक्तिं
भक्तः परं संश्रयमेति विष्णुम् ॥१७३॥

तस्मिन्नशेषौजसि सर्वरूपि-
ण्यव्यक्तविस्पष्टतनावनन्ते ।
भक्ताचलं चित्तमपेतदोषं
सदास्ति विष्णावभयाय भूयः ॥१७४॥

समर्प्य विष्णौ निखिलं हि कर्म-
कलापमाद्यन्तविकारहीनम् ।
अर्थेन्द्रियादेः परमान्तरं यत्
पदं ह्यवापाच्युतसंज्ञकं तत् ॥१७५॥

द्वेषानुबन्धेन हि कीर्तितोऽपि
सम्यक् स्मृतस्तेन च वासुदेवः ।
मोक्षं ददानः शिशुपालमुख्यान्
स केशवो भक्तिमतां पुनः किम् ॥१७६॥

काचित्किलावसथस्यान्तःस्थिता दृष्ट्वा बहिर्गुरुम् ।
तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना ॥१७७॥

तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ॥१७८॥

चिन्तयन्ती जगन्मूलं परब्रह्मस्वरूपिणम् ।
साक्षात्कृत्य ततो मुक्तिं गतान्या गोपकन्यका ॥१७९॥

गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
भजमानास्ततो ज्ञानादवापुर्मुक्तिमञ्जसा ॥१८०॥

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥१८१॥

संसारपतितस्यैको माधवः शरणं परम् ।
तमनाराध्य जगतां सर्वेषां प्रभवास्पदम् ॥
शाश्वती प्राप्यते केन निरतिशयनिर्वृतिः ॥१८२॥

सोऽहं त्वाशरणमपारमीशमाद्यं
सम्प्राप्तः परमपरं यतो न किञ्चित् ।
संसारश्रमपरितापतप्तचेता
निर्वाणेऽपरिणतधाम्नि साभिलाषः ॥१८३॥

इत्थं स्तुतस्तदा तेन मुचुकुन्देन धीमता ।
भक्तेः फलञ्च मोक्षाख्यं प्रादान्नारायणो हरिः ॥१८४॥

यैः स्वधर्मपरैर्विष्णुर्नरैराराधितो हरिः ।
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥१८५॥

आराध्य तमभीप्सन्ते कामान्नात्मामृतं किल ।
यद्येते पुरुषा माया सैवेयं माधवस्य हि ॥१८६॥

धर्मो ज्ञानं विषयविरतिः सिद्धयश्चाणिमाद्याः
यस्य श्रीमच्चरणकमलद्वन्द्वपीठे लुठन्ति ।
यस्योन्मेषः सकलभुवनाम्भोजपंक्तेर्विनाशः
सोऽयं शम्भुर्जयति जगतां मङ्गलं यस्य नाम ॥१८७॥

संसाराग्निमहादुःखव्याकुलीभूतमानसः ।
शङ्करं शरणं मत्वा कश्चित्प्रार्थयते शिवम् ॥१८८॥

अग्निमध्ये यथा जन्तुर्मरणेन विवर्जितः ।
प्राप्नोति दुस्सहं दुःखं संसाराग्नौ तथाऽस्म्यहम् ॥१८९॥

त्रिविधैर्दुस्सहैर्दुःखैः पीडितोऽस्मि निरन्तरम् ।
तवाधीनः पशुर्नित्यमनीशः पुण्यपापयोः ॥१९०॥

दशां दीनतमां प्राप्तो मत्तो नान्योऽस्ति कश्चन ।
कृपालुश्च तथा त्वं तु नियन्ता पुण्यपापयोः ॥१९१॥

यदि वेदाः प्रमाणानि यदि तिष्ठति शङ्करः ।
प्राणमोक्षात्ततः पूर्वं दुःखमेतद्विनाशय ॥१९२॥

आर्तत्राणकरो यस्माद्वेदवाक्यान्मया श्रुतः ।
भवानतः प्रपन्नोऽस्मि भवन्तं दीनवत्सलम् ॥१९३॥

अहं किंचिन्न जानामि स्वात्मानमपि शङ्कर ।
दुःखमेकं विजानामि मातृहीनः शिशुर्यथा ॥१९४॥

क्षुत्पिपासे पिशाच्यौ द्वौ बाधेते मामहर्निशम् ।
यौवनवनमाविष्टं सर्पः कन्दर्पनामकः ॥१९५॥

दशत्यतिविषो नित्यं प्रतीकारविवर्जितः ।
इमे शब्दादयस्तद्वद् वृकाः सर्वत्र संस्थिताः ॥१९६॥

वधूकाकैश्च सहिता हन्तुमायान्त्यनेकशः ।
क्रोधसिंहस्य नादेन हृदयं परिदूयते ॥१९७॥

मम लोभोऽपि चित्रोऽयं तरक्षुर्नेत्रदाहकः ।
डाकिनीवाहनत्वेन प्रसिद्धो मृग एव यः ॥१९८॥

तरक्षुर्नामकश्चित्रो नानारूपधरो यतः ।
पुंसां दर्शनमात्रेण नेत्रयोः परितापकः ॥१९९॥

मोहोऽयं मादिरापानाद् भृशमुन्मादकारणम् ।
रुणद्ध्यपि प्रकाशञ्च ममाहंनामको गिरिः ॥२००॥

एवमादिसहस्राणि दुःखानि मयि सन्ति भोः ।
यानि श्रोतुं न च भवान् शक्नोति करुणावृतः ॥२०१॥

न नाकपृष्ठं न च सार्वभौमं
न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
महेश्वर त्वां विरहय्य काङ्क्षे ॥२०२॥

तावत्त्वं पाहि मां नित्यं विघ्नहीनं कुरु प्रभो !
यावन्मे जायते नैतद्ब्रह्मज्ञानं शुचापहम् ॥२०३॥

एवं सम्प्रार्थ्यमानः सन् तस्मै स भगवान् शिवः ।
मोक्षस्य कारणं ज्ञानं दत्तवान् करुणाकरः ॥२०४॥

भक्तः पूर्वमिमं देवमित्थं सम्प्रार्थ्य सर्वदा ।
प्राप्तवानात्मविज्ञानं नियमेनैव मुक्तिदम् ॥२०५॥

एवं सम्प्रार्थितो देवो भगवान् पाशमोचकः ।
जन्मादिविक्रियाशून्यः प्रसन्नः परमेश्वरः ॥२०६॥

तस्यैवं हि प्रसादेन पश्यति तं हि मुक्तिदम् ।
साक्षात्कृत्य महात्मानं मोक्षमाप्नोति शाश्वतम् ॥२०७॥

रुद्रप्रसादतश्चान्ये जानन्ति च महाधियः ।
वेदकारणमीशानं सर्वज्ञश्च स्वयंप्रभम् ॥२०८॥

तं विश्वरूपं सर्वात्मभूतमीड्यं सुरासुरैः ।
स्वाचित्तेषु स्थितं देवं भक्त्या ज्ञात्वा तमागताः ॥२०९॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
स एव ब्रह्मविज्ञानं फलवत्प्राप्नुयान्नरः ॥२१०॥

आनन्दात्मस्वरूपाय तस्मै कुर्वन्ति ये नमः ।
तेषाञ्च तदिदं ज्ञानं बहुधा यत्समीरितम् ॥२११॥

भविष्यति भृशं पापप्रक्षयाच्छुद्धचेतसाम् ।
ज्ञानान्मुक्तिं प्रयान्त्येते यतो नावर्तते पुनः ॥२१२॥

नमतस्तत एवात्मा प्रत्यक्षोऽत्र प्रजायते ।
प्रत्यक्षे सर्वदुःखानां हानिरस्योपजायते ॥२१३॥

स्तुतिञ्चेमां प्रकुर्वीत स्वात्मज्ञानप्रसिद्धये।
नमोऽस्तु तेजसे तस्मै यस्मै कस्मै चिदात्मने ॥२१४॥

सर्वभूतात्मभूताय सृष्टिस्थित्यन्तकारिणे ।
तस्मै मुमुक्षवे ब्रह्मज्ञानं यच्छति निश्चितम् ॥२१५॥

एवं हि स्तुवतो नित्यं तथैनञ्च नमस्यतः ।
मुमुक्षोरात्मविज्ञानमिदमेव प्रयच्छति ॥२१६॥

वेनो नाम पुरा कश्चिद्गन्धर्वः शुद्धमानसः ।
उक्तस्तुतिनमस्याद्यैर्जज्ञे ब्रह्म सनातनम् ॥२१७॥

एवं संस्तूयमानोऽयं भगवानधिकारिभिः ।
आत्मानं दर्शयत्येनं तान्प्रति तुल्यवर्जितम् ॥२१८॥

दृष्ट्वा ह्यानन्दमात्मानं हृष्टचित्ता हि निर्जराः ।
एवमाहुः सदेवान्यानतुग्रहकरा नृणाम् ॥२१९॥

आनन्दममृतं प्राप्ताः प्रज्ञया भाग्यशालिनः ।
जाताश्चामृत्युधर्माण ईश्वराराधका वयम् ॥२२०॥

प्राप्ताश्च परमं ज्योतिरानन्दात्मानमद्वयम् ।
नित्यमात्मतयात्मानं सर्वदुःखविवर्जिताः ॥२२१॥

नारीकुणपपण्येन जगतो योऽत्र वञ्चकः ।
धर्मादिरूपसर्वस्वापहारकत्वहेतुना ॥२२२॥

धूर्तः कामस्तथारातिः क्रोधादिर्विविधोऽपि यः ।
किं करिष्यति भक्तानामस्माकं पर आत्मनि ॥२२३॥

नित्यमात्मतया दृष्टो ह्यस्माभिर्यैरयं पुमान् ।
देशतः कालतस्तद्वद्वस्तुतश्छेदवर्जितः ॥२२४॥

प्रतीयते शिवश्चैव नृणामात्मन्युपासनात् ।
अनन्तस्तत एवायं कथ्यते वेदवादिभिः ॥२२५॥

संसाराब्धेर्हि भक्तानां तारकस्तार ईरितः ।
सुखं करोति भक्तानां तेन शङ्कर ईरितः ॥२२६॥

त्वां सर्वजगतो नित्यं हृदयाब्जनिवासिनम् ।
स्वकीयाभिर्वयं वाग्भिः स्तुम आत्मस्तुतिप्रियम् ॥२२७॥

स्तुतयस्तव देवेश घटोध्न्य इव धेनवः ।
अदुग्धा भक्तवत्सांश्च समिच्छतः फलं पयः ॥२२८॥

आह्वयन्ति स्नेहशब्दान् कृत्वा दुःखापहारकाः ।
आनन्दाब्धौ निमग्नानां तृप्तिं यच्छन्ति निर्भराम् ॥२२९॥

ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम् ।
सर्वदाऽनन्यभावेन सर्वेशं समुपासते ॥
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् ॥२३०॥

हरचरणनिरतमतिना भवितव्यमनार्जवं युगं प्राप्य ।
संसारभयं न भवति हरभक्तिरसायनं पीत्वा ॥२३१॥

दिवसं दिवसार्धं वा मुहूर्तं वा क्षणं लवम् ।
न ह्यलब्धप्रसादस्य भक्तिर्भवति शङ्करे ॥२३२॥

न नाकपृष्ठं न च देवराज्यं
न ब्रह्मलोकं न च निष्कलत्वम् ।
न सर्वकामानखिलान्वृणोति
दासत्वमीशस्य भक्तो वृणोति ॥२३३॥

यावच्छशाङ्कधवलामलबद्धमौलि-
र्न प्रीयते पशुपतिर्भगवान्महेशः ।
तावज्जरामरणजन्मशताभिघातै-
र्दुःखानि देहविहितानि भवन्ति तानि ॥२३४॥

दिवसकरशशाङ्कवह्निदीप्तं
त्रिभुवनसारमपारमाद्यमेकम् ।
अजरममरमगम्यरुद्रं
जगति पुमानिह को लभेत शान्तिम् ॥२३५॥

यदि नाम जन्म भूयो भवति मदीयैः पुनर्दोषैः ।
तस्मिंस्तस्मिञ्जन्मनि भवे भवेन्मेऽक्षया भक्तिः ॥२३६॥
ये चैनं प्रतिपद्यन्ते भक्तियोगेन भाविताः ।
तेषामेवात्मनाऽऽत्मानं दर्शयत्येष शङ्करः ॥२३७॥
यं ज्ञात्वा न पुनर्जन्म मरणञ्चापि विद्यते ।
यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ॥२३८॥
कैवल्या या गतिर्देव निरुपाख्या निरञ्जना ।
ज्ञानविज्ञानयुक्तानां परमा सा गतिर्भवान् ॥२३९॥

रुद्रस्यैव प्रसादेन भक्तिरुत्पद्यते नृणाम् ।
यया यान्ति परां सिद्धिं तद्भागवतचेतसः ॥२४०॥
ये सर्वभावानुगताः प्रपद्यन्ते महेश्वरम् ।
प्रपन्नवत्सलो देवः संसारात्तान्समुद्धरेत् ॥२४१॥
येन जन्मस्वनेकेषु भक्त्या ह्याराधितो भवः ।
प्रीतश्च भगवान् ज्ञानं ददौ तस्मै भवान्तकम् ॥२४२॥
प्रपन्नाश्च महादेवं भक्त्या ये मानवा भुवि ।
न ते संसारवशगा एवं हि निश्चिता मतिः ॥२४३॥
एनमात्मतया भक्तो विशेत्तादात्म्यरूपतः ।
विष्णुस्तेनायमुदितः सर्वगः स महेश्वरः ॥२४४॥
यमाराध्य महात्मानं स्थितं क्षीरार्णवादिषु ।
घोरं भवार्णवं सन्तस्तरेयुर्गोष्पदं यथा ॥२४५॥
यावन्न निर्गुणं ब्रह्म भाति चित्तेऽत्र योगिनः ।
तावन्नारायणः साक्षात्सर्वदेववपुः पुमान् ॥२४६॥
भजनीयः सदैवायं सगुणरूपधृक् प्रभुः ।
ब्रह्मण्यं देवकीपुत्रं भजतां मधुसूदनम् ॥२४७॥
दीपवत्स्वात्मनो भाने हेतुर्भवति सर्वथा ।
तद्भक्त्या ह्ययं योगी सर्वभूतस्थितं हरिम् ॥२४८॥
यत आत्मतया वेत्ति शुद्धान्तःकरणः पुमान् ।
द्वैतमद्वैतमेव स्याज्ज्ञाते द्वैतं न विद्यते ॥२४९॥

विज्ञापय स्वरूपं स्वं वासुदेव स्वरूपधृक् ।
देवकीनयनानन्दवर्धन ! नन्दनन्दन ! ॥२५०॥

एवं सम्प्रार्थ्य मेधावी तं वै कृष्णमधोक्षजम् ।
तस्मिंश्च जायते बोधो ब्रह्माहमिति योगिनः २५१॥

आस्तिक्यबुद्धिसंयुक्तो गुरुभक्तिसमन्वितः ।
गोविन्दभक्तियोगेन ब्रह्मविच्च प्रजायते ॥२५२॥

एवं भूतं हि विद्वांसं कर्माणि निबध्नन्ति नो ।
लोकस्य संग्रहार्थाय कृतान्यथ च लीलया ॥२५३॥

एकान्तभगवद्भक्त्या वशीकृतेन्द्रियो हि यः ।
ब्रह्मात्मविषया प्रज्ञा तस्य फलावसायिनी ॥२५४॥

ईश्वराराधनार्थं हि नित्यं कर्म समाचरन् ।
शुद्धान्तःकरणो ज्ञानान्मोक्षमाप्नोति पूरुषः ॥२५५॥

फलतृष्णाविहीनस्य कर्तृत्वानाभिमानिनः ।
परमेश्वरप्रीत्यर्थं कुर्वतः कर्म चानिशम् ॥२५६॥

ईश्वरस्य प्रसादेन ज्ञातब्रह्मात्मनो मुनेः ।
कारणाभावतः कर्म सफलमेव नश्यति ॥२५७॥

कृष्णाराधनयोगेन तस्मिन् कर्मसमर्पणात् ।
ज्ञानेन संशयोच्छेदात्प्रमादस्य विवर्जनात् ॥२५८॥

ईश्वरस्य प्रसादेन विरक्तः पश्यति यदा ।
ब्रह्मात्मानं सदानन्दं वीतशोको भवेत्तदा ॥२५९॥

अत्यद्भुता गुणमयी हरिशक्तिरेषा
मायाभिधा च दुरतिक्रमतः प्रसिद्धा ।
भक्त्या तदेकशरणाः खलु तं भजन्ति
ज्ञात्वा ततस्त्वविरतं प्रतरन्ति मायाम् ॥२६०॥

पापान्विताः खलु नरेष्वधमाः विमूढाः
संघातभ्रान्तिप्रतिबद्धविवेकज्ञानाः ।
हिंसाऽनृतादिमनसा प्रतिपद्यमानाः
घोरे पतन्ति नरके न हरिं भजन्ते ॥२६१॥

येषां सुकर्मवशतोऽन्तगतं तु पापं
ते द्वन्द्वमोहरहिताः खलु तं भजन्ते ।
ज्ञात्वा ततो ह्यजमनन्तमथाद्वितीयं
स्वाराज्यसौख्यमधिगम्य भवन्ति मुक्ताः ॥२६२॥

सकामा वा निष्कामा वा पुण्यान्विता भजन्ति तम् ।
पारम्पर्येण वा साक्षाज्ज्ञानान्मायां तरन्ति ते ॥२६३॥

सकामेष्वपि जिज्ञासुः साक्षाज्ज्ञानात्तरेद्धि ताम् ।
आर्त्तोऽर्थार्थी च जिज्ञासाद्वारा ज्ञानात्तरेद्धि ताम् ॥२६४॥

आर्त्तादयः सकामा ये तद्भक्ता देवभक्ततः ।
विशिष्यन्ते यतो देवभक्तानामन्तवत्फलम् ॥२६५॥

भवेन्माधवभक्तानामनापदादि स्यादिह ।
पश्चाद्विज्ञानद्वारेण तमपि प्राप्नुवन्ति ते ॥२६६॥

निष्कामो ज्ञानवान् तीर्णमायश्चानन्यभक्तिमान् ।
सर्वोत्कृष्टो हरिस्तस्य प्रियोऽत्यन्तं स च हरेः ॥२६७॥
सकामा अप्युत्कृष्टास्ते तदात्मा ज्ञानवान्मतः ।
तदेकचित्तः सन्तं हि मन्यते परमं फलम् ॥२६८॥
भगवत्स्मरणाज्ज्ञानं ब्रह्मात्मैकत्वगोचरम् ।
ततो भगवतः प्राप्तिर्भवत्येव न संशयः ॥२६९॥
निरन्तरादरेणातो भगवन्तमनुस्मरेत् ।
सर्वं ब्रह्मेति विज्ञाय तमेव प्राप्नुयादिति ॥२७०॥
निरन्तरादरेणाथ दीर्घकालं स्मरति यः ।
समाहितः सम्यग्ज्ञानात्प्राप्नोति ब्रह्मनिर्द्वयम् ॥२७१॥
ब्रह्म प्राप्य पुनर्जन्म दुःखस्थानं विनश्वरम् ।
न प्राप्नुवन्ति तद्भक्ता मोक्षमेव यतो गताः ॥२७२॥
भगवदेकशरणाः पुरुषार्थस्य भाजनम् ।
भवन्तीशप्रसादेन शमादिगुणसंयुताः ॥२७३॥
भगवद्विमुखानां तु पुरुषार्थो न सिद्ध्यति ।
लोकद्वयेऽपि यत्किञ्चिद्धराकाः सर्व एव ते ॥२७४॥
लौकिकं वैदिकं कर्म वासुदेवे समर्पितम् ।
भजनमेतदेवोक्तं विद्वद्भिर्वेदपारगैः ॥२७५॥
इष्टानिष्टफलैरेवं संसृज्यते न कर्मभिः ।
शुद्धान्तःकरणो ज्ञानात्परं ब्रह्म समश्नुते ॥२७६॥

कल्पतरुर्यथा भक्तानन्ुगृह्णाति नेतरान् ।
कृष्णो ज्ञानात्तथा भक्तान्मोचयत्येव नेतरान् ॥२७७॥
विवस्वान् सम्मुखं प्राप्तान् शीतान्धकारहानतः ।
अनुगृह्णाति नैवान्यान् गिरिगुहादिषु स्थितान् ॥२७८॥
एतावता न वैषम्यं सवितुः स्पृश्यते क्वचित् ।
तथैव सम्मुखं प्राप्तान्मोचयति भक्तान् हरिः ॥२७९॥
नासम्मुखं गतानन्यान् वैषम्यावसरः कुतः ।
अनेनैव दृष्टान्तेन नास्त्येव नैर्घृण्यमपि ॥२८०॥
भजतेऽनन्यभक्तिर्यो ह्यजामिलादिरिव तम् ।
सदाचारः स विज्ञेयः साधुनिश्चयवत्त्वतः ॥२८१॥
बहुकालमधर्मात्मा शीघ्रं धर्मात्मतामियात् ।
वैराग्यात्सर्वदा शान्तिं लब्ध्वा कृतार्थ एव सः ॥२८२॥
हरिं शरणमागत्य ये केचिदपि प्राणिनः ।
परमगत्ययोग्याश्च तेऽपि यान्ति परां गतिम् ॥२८३॥
हरावेव मनो यस्य तथा तद्भक्त एव यः ।
तस्य पूजनशीलो यो हरिं नमस्करोति यः ॥२८४॥
कायेन मनसा वाचा तदेकशरणश्च यः ।
हरौ मनः समाधाय तमेवाप्नोति निर्भयम् ॥२८५॥
हरावेकाग्रबुद्धीनां प्रेमभक्तिमतां सताम् ।
ज्ञानोपायं ददातीत्थं येनोपायेन यान्ति तम् ॥२८६॥

तदेकनिष्ठया भक्त्या वेदान्तश्रवणादिना ।
साक्षात् कर्तुं हरिः शक्यस्ततः प्राप्तुं स्वरूपतः ॥२८७॥

सर्वाणि कर्माणि हरौ समर्प्य
श्रीवासुदेवैकपरा महान्तः ।
एकान्तभक्त्या परिचिन्तयन्तो
वृत्त्यन्तरं तत्र निवारयन्ति ॥२८८॥

तेषां हरौ वेशितचेतसाश्च
दुरुत्तरात्संसृतिसागराच्च ।
क्षिप्रं परे ब्रह्मणि शुद्धरूपे
विज्ञानतो धारयिता भवेत्सः ॥२८९॥

हरौ निवेशयेद् बुद्धिं तस्मिंश्च स्थापयेन्मनः ।
ब्रह्मात्मज्ञानतो ह्यन्ते तदात्मनाऽवतिष्ठते ॥२९०॥
भगवत्प्रीत्यर्थं कर्म करोति नान्यकामतः ।
प्रापणीयो हरिर्यस्य भजनीयः स एव हि ॥२९१॥
पुत्राद्यासक्तिहीनो यो निर्वैरोऽप्यपकारिषु ।
ईदृशो भगवद्भक्तस्तमेवाप्नोत्यभेदतः ॥२९२॥
वासुदेवात्परो नान्य एवमव्यभिचारिणी ।
भक्तिर्भगवति प्रीतिर्ज्ञानहेतुरुदाहृता ॥२९३॥
हर्येकशरणः सँश्च हित्वा भोगस्पृहां सदा ।
साधनान्यनुवर्तेत मुमुक्षुर्ज्ञानजन्मने ॥२९४॥

निष्कामभक्तियोगेन हरिं यः सेवतेऽनिशम् ।
स बाधित्वाऽखिलं दृश्यं ज्ञानान्मोक्षाय कल्पते ॥२९५॥
केशवैकशरणत्वाद्वैराग्येण शमादिना ।
जानाति तत्पदं श्रुत्वा यस्मान्नावर्तते पुनः ॥२९६॥
सर्वव्यापिनमात्मानं सच्चिदानन्दमद्वयम् ।
भक्त्यैव तत्त्वतो ज्ञात्वा ब्रह्मैव भवति स्वयम् ॥२९७॥
केशवे सर्वकर्माणि समर्प्य तद्व्यपाश्रयः ।
सम्यग्ज्ञानादवाप्नोति कैवल्यं परमं पदम् ॥२९८॥
संसाराब्ध्युत्तरणाय हरिं शरणमाश्रयेत् ।
कायेन मनसा वाचा ततो ज्ञानाद्विमुच्यते ॥२९९॥
अवश्यं भगवद्भक्तिर्मोक्षफलप्रदा यतः ।
वाक्यजनितविज्ञानात्तस्मात्तच्छरणो भवेत् ॥३००॥
जन्मान्तरसहस्रेषु तपःकर्मसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥३०१॥
वासुदेवे भगवति भक्तिरव्यभिचारिणी । ।
सापि ज्ञानस्य हेतुः स्यादमानित्वादिकं यथा ॥३०२॥
भक्त्या ह्यनन्यया ज्ञानं ब्रह्मात्मैकत्वगोचरम् ।
साक्षात्कारात्मकं तस्मान्मुक्तिः करफलायते ॥३०३॥
यः प्रस्तौति सदा देवं साक्षाद्विष्णुं स पश्यति ।
सर्वात्मानं ततो ज्ञानादमृतत्वञ्च गच्छति ॥३०४॥

कृतानि कर्माणि शुभेतराणि
　　कामप्रयुक्तानि तथेतराणि ।
सर्वाणि निक्षिप्य किलाखिलेशे
　　भावाँश्च सर्वान्विनियोज्य तस्मिन् ॥३०५॥

हेतुं च धर्मेतरयोर्निमित्तं
　　परं कलाहीनमथापि शुद्धम् ।
तं विश्वरूपं भवभूतमीड्यं
　　देवं स्वचित्तस्थमुपास्य पूर्वम् ॥३०६॥

संसारवृक्षोपरिवर्तमानं
　　संसारवृक्षोद्गतिमाविधानम् ।
धर्मावहं पापनुदं भगेशं
　　ज्ञात्वाथ कर्माणि लयं व्रजन्ति ॥३०७॥

कर्मक्षये याति निजात्मनिस्थं
　　विश्वस्य धातारमथोऽन्यदस्मात् ।
जन्तुर्जरारोगमृतेर्विहीनं
　　शिवं प्रशान्तं निजरूपमाद्यम् ॥३०८॥

अहं तरिष्यामि दुरन्तपारं
　　तमो मुकुन्दाङ्घ्रिनिषेवयैव ।
विश्वाधिपो यो गिरिशः सुराणा-
　　मजोऽपि जन्मास्थितिभङ्गहेतुः ।

हिरण्यगर्भो यत उद्भभूव
युनक्त्वसौ मोक्षदयाधियानः ॥३०९॥
आदौ य एको विदधाति विश्वं
अजातिदेवोऽखिलशक्तियोगात् ।
यस्मिंल्लयं याति समस्तमन्ते
ददातु बुद्धिं शिवदायिनीं नः ॥३१०॥
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
तं देवदेवमीशानं कोऽवमन्येत बुद्धिमान् ॥३११॥
तद्भक्ता गतसन्देहा विपर्ययविवर्जिताः ।
मुक्तिं गच्छन्ति तत्त्वज्ञा ज्ञाननाशिततमस्काः ॥३१२॥
पुराणं परमं देवं देवदेवं सनातनम् ।
ये प्रपन्नाः सुरगुरुं न ते मुह्यन्ति कर्हिचित् ॥३१३॥
अनादिनिधनं देवं लोककर्तारमव्ययम् ।
ये भक्तास्तं प्रपन्नाश्च दुर्गाण्यतितरन्ति ते ॥३१४॥
अपि देवा न जानन्ति गुह्यमाद्यं जगत्पतिम् ।
ज्ञानयोनिं हरिं विष्णुं मुमुक्षूणां परायणम् ॥३१५॥
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥३१६॥
एकोऽपि कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः ।

दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥३१७॥

कृष्णव्रताः कृष्णमनुस्मरन्तो
रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते कृष्णदेहाः प्रविशन्ति कृष्ण–
माज्यं यथा मन्त्रहुतं हुताशे ॥३१८॥

य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् ।
ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा ॥३१९॥

श्रद्धां निष्ठां संगृहीतेन्द्रियत्वं
विद्याहेतून् वक्ति साक्षान्मुकुन्दः ।
लब्ध्वैतेभ्यो ज्ञानमेवास्य भक्तः
शान्तिं मोक्षाख्यां परां क्षिप्रमेति ॥३२०॥

एष हि सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥३२१॥

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥३२२॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥३२३॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥३२४॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥३२५॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥३२६॥
तद्भक्ताः शुद्धसत्त्वा ये ब्रह्मात्मज्ञानसंयुताः ।
जीवन्मुक्ताः किलानेके कैवल्यं समुपागताः ॥३२७॥
ईश्वरानुग्रहादेव भवेदद्वैतवासना ।
ईशानुग्रहसिद्ध्यर्थं ब्रह्मोपास्यं मुमुक्षुभिः ॥३२८॥
ब्रह्मोपासकमीशानुगृहीतं ब्रह्मवेदिनम् ।
वाञ्छन्ति ब्रूहि विद्यां त्वं भक्तिमन्तोऽखिला जनाः ॥३२९॥
उपासनञ्च यत्किञ्चिद्विद्याप्रकरणे श्रुतम् ।
ऐकात्म्यज्ञानजन्माभिमुख्याय कल्पतेऽपि तत् ॥३३०॥
वराहरूपिणं विष्णुं भजन्ति भक्तितश्च ये ।
निवृत्ताज्ञानतत्कार्या जीवन्मुक्ता भवन्ति ते ॥३३१॥
हरिचरणस्मरणेन पूजया च
स्वकृतमसः परिमुच्यते हि जन्तुः ।
न हि मरणप्रभवप्रणाशहेतु-
र्हरिचरणस्मरणादृतेऽस्ति किञ्चित् ॥३३२॥
आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥३३३॥

शुद्ध्यति हि नान्तरात्मा
कृष्णपदाम्भोजभक्तिमृते ।
वसनमिव क्षारोदै-
र्भक्त्या प्रक्षाल्यते चेतः ॥३३४॥

यद्वत् समलादर्शे सुचिरं भस्मादिना शुद्धे ।
प्रतिफलति वक्त्रमुच्चैः शुद्धे चित्ते तथा ज्ञानम् ॥३३५॥

अविद्येयमरण्यानी वासनावायुनाऽऽकुला ।
तस्यां व्याप्ता भृशं जीवा भ्रमन्तो वासनावशात् ॥३३६॥

विश्रान्तिं न लभन्ते ते दृढतराश्रयं विना ।
महावृक्षत्रयं तस्यां ब्रह्मविष्णुशिवात्मकम् ॥३३७॥

तिष्ठत्यनेकफलदं प्राणिनां सुखकारकम् ।
दृढाश्रयमन्विष्यतामतिविश्रान्तिदायकम् ॥३३८॥

अस्या निर्गमने शक्तो यदि विद्वान्महाकरी ।
उपद्रुतश्च कामादिसिंहैः कालाग्निनापि च ॥३३९॥

तत्र वृक्षत्रयस्यैकमाश्रयेदाश्रयञ्च यः ।
श्रमापहमाश्रितानां सर्वदा कामरूपिणम् ॥३४०॥

ततस्तापममुं जह्यात् सदा तद्वृक्षसंश्रयात् ।
यथ चायं पुनस्तापं नाप्नुयान्मूलसंक्षयात् ॥३४१॥

अविद्येयमरण्यानी घोरदुःखप्रदायिनी ।
तथाप्यनेन तरुच्छाया श्रिताऽतो नैव दुःखदा ॥३४२॥

आश्रितश्च तरुं जन्तुर्निस्तमस्कः प्रजायते ।
एतं समाश्रितो जन्तुर्नैव सीदति कर्हिचित् ॥३४३॥

धर्मार्थकाममोक्षाणां चतुर्णाञ्च फलात्मनाम् ।
दातारं चित्तसंस्थानां सर्वेषामपि देहिनाम् ॥३४४॥

उन्मूलयेदरण्यानीं स्नेहमूलामिमां सदा ।
अविद्यां ब्रह्मविज्ञानशुण्डातस्तु करी वने ॥३४५॥

शुण्डां यावद् दृढां नैनां प्राप्नुयात्तावदात्मवान् ।
वृक्षानमून् समाश्रित्य तिष्ठेद्विगतसाहसः ॥३४६॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥३४७॥

इत्यादिश्रुतिमानेन कायेन मनसा गिरा ।
भगवद्भक्तिरस्सफले ज्ञाने तत्साधनेष्वपि ।
बहिरङ्गान्तरङ्गेषु ह्यत्यर्थमुपयुज्यते ॥३४८॥

पूर्वाङ्गानुष्ठिता भक्तिरुत्तरमङ्गमानयेत् ।
अन्यथा विघ्नबाहुल्यात् फलसिद्धिः सुदुर्लभा ॥३४९॥

तस्मात्पूर्वाङ्गसिद्धावप्युत्तराङ्गस्य सिद्धये ।
विधेया भगवद्भक्तिस्तां विना तन्न सिद्ध्यति ॥३५०॥

जीवन्मुक्तिदशायान्तु न भक्तेः फलकल्पना ।
अद्वेष्टृत्वादिवत्तेषां स्वभावो भजनं हरेः ॥३५१॥

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहेतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥३५२॥

जीवन्मुक्ते निर्विकल्पाद्वरिष्ठा
निष्ठोक्ताऽतोऽङ्गेन भक्तेर्विशिष्टा ।
तत्रानन्दाब्धौ कृता येन निष्ठा
संसाराब्धौ वै पुनर्नो प्रविष्टः ॥३५३॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
इत्यादिवचनात्प्रेमभक्तोऽयं मुख्य उच्यते ॥३५४॥

एतत्सर्वं भगवता गीताशास्त्रे प्रकाशितम् ।
व्याख्याने तस्य विद्वांसः समुत्साहं वदन्त्यतः ॥३५५॥

भक्तेरेवं विधाया नो वक्तुं केनापि शक्यते ।
महिमा भगवान्यस्यां प्रीयते मोक्षकारकः ॥३५६॥

स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमस्मि नृणां न वैष्णवानाम् ॥३५७॥

हरिममरगणार्चिताङ्घ्रिपद्मं
प्रणमति यः परमार्थतो हि मर्त्यः ।
तमथ गतसमस्तपापबन्धं
व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥३५८॥

इति यमवचनं निशम्य पाशी
यमपुरुषस्तमुवाच धर्मराजम् ।
कथय मम विभोः समस्तधातु-
र्भवति हरेः खलु यादृशोऽस्य भक्तः ॥३५९॥
न चलति निजवर्णधर्मतो यः
समगतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः
सितमनसं तमवेहि विष्णुभक्तम् ॥३६०॥
कलिकलुषमलेन यस्य नात्मा
विमलमतेर्मलिनीकृतोऽस्तमोहे ।
मनसिकृतजनार्दनं मनुष्यं
सततमवेहि हरेरतीवभक्तम् ॥३६१॥
कनकमपि रहस्यवेक्ष्य बुद्ध्या
तृणमिव यः समवैति वै परस्वम् ।
भवति भगवत्यनन्यचेताः
पुरुषवरं तमवेहि विष्णुभक्तम् ॥३६२॥
स्फटिकगिरिशिलाऽमलः क्व विष्णु-
र्मनसि नृणां क्व च मत्सरादिदोषः ।
नहि तुहिनमयूखरश्मिपुञ्जे
भवति हुताशनदीप्तिजः प्रतापः ॥३६३॥

विमलमतिविमत्सरः प्रशान्तः
शुचिचरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो-
वसति सदा हृदि तस्य वासुदेवः ॥३६४॥
हृदि यदि भगवाननादिरास्ते
हरिरसि शङ्खगदाधरोऽव्ययात्मा ।
वसति हृदि सनातने च तस्मिन्
भवति पुमान् जगतोऽस्य सौम्यरूपः ॥३६५॥
यमनियमविधूतकल्मषाणा-
मनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां
व्रज भट दूरतरेण मानवानाम् ॥३६६॥
सकलमिदमहञ्च वासुदेवः
परमः पुमान् परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते
हृदयगते व्रज तान् विहाय दूरात् ॥३६७॥
कमलनयन ! वासुदेव ! विष्णो !
धरणिधराच्युत ! शङ्खचक्रपाणे !
भव शरणमितीरयन्ति ये वै
त्यज भट दूरतरेण तानपापान् ॥३६८॥

विसृजति हृदयं न यस्य साक्षाद्
हरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥३६९॥

सर्वेषामपि शास्त्राणां रहस्यं परमं जगुः ।
भगवद्भक्तिनिष्ठां हि गीता तत्र समाप्यते ॥३७०॥

सैव साधनरूपा च फलरूपा च निष्ठयोः ।
ज्ञानकर्माख्ययोस्तस्माद्गीतान्त उपसंहृता ॥३७१॥

सर्वेभ्यो वर्णधर्मेभ्यो ह्याश्रमधर्मेभ्यस्तथा ।
भगवद्भक्तिरेकैव सामान्येभ्यो गरीयसी ॥३७२॥

भगवतो भक्तो यस्मादन्यापेक्षाविरहिणः ।
तस्यैवानुग्रहाज्ज्ञानात्कृतार्थो भवति किल ॥३७३॥

विधेया भगवद्भक्तिरेकैवातो मुमुक्षुभिः ।
धर्माः सन्तु न वा सन्तु सापेक्षैः खलु किञ्च तैः ॥३७४॥

यदा तु वैष्णवी भक्तिर्दृढतरैव जायते ।
ततश्चोदेति वैराग्यं ज्ञानमाविर्भवेत्ततः ॥३७५॥

अभ्यासात्पक्वतामेति ज्ञानं क्रमेण निश्चितम् ।
परिपक्वात्मविज्ञानाज्जीवन्मुक्तो न संशयः ॥३७६॥

ब्रह्मज्ञानं विना भक्त्या कदाचिन्नैव जायते ।
सर्वोपायान्परित्यज्य मुमुक्षुर्भक्तिमाश्रयेत् ॥३७७॥

गुरूपदेशमाकर्ण्य गुरुपूजां विधाय च ।
गुर्वनुग्रहतः सोऽपि भक्तिनिष्ठो बभूव ह ॥३७८॥

भक्त्यतिशयतः पक्वाद्विज्ञानात्क्षिप्रमेव हि ।
अनायासेन मोक्षार्थी साक्षान्नारायणो ह्यभूत् ॥३७९॥

वक्त्येवं भक्तिमाहात्म्यं त्रिपान्नारायणश्रुतिः ।
श्रुत्वाधिकारिणो नूनं गता भक्त्येकनिष्ठताम् ॥३८०॥

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥३८१॥

अन्वयव्यतिरेकाभ्यां यद्भक्तिर्मुक्तिकारणम् ।
सम्यग्विज्ञानद्वारेण तस्मै भगवते नमः ॥३८२॥

अव्यक्तव्यक्तरूपाय भक्तानां मुक्तिहेतवे ।
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ॥३८३॥

नमामि रामं सकलाभिरामं
परास्तरामश्च जगद्विरामम् ।
अकामकामं भजतामकामं
नित्याप्तकामं सततात्मकामम् ॥३८४॥

जयन्ति ते ये श्रुतिगीतसद्गुणाः
स्फुरत्सुरादीश शिखाश्मरश्मयः ।
सतां शरण्याः शिवयोः शिवावहाः
पित्रोः प्रजानामपि पादपांसवः ॥३८५॥

इदं हि गाङ्गं त्यजतामिहाङ्गं
पुनर्न चाङ्गं यदि चेच्छुभाङ्गम् ।
याने विहङ्गं शयने भुजङ्गं
करं रथाङ्गं चरणेऽम्बुगाङ्गम् ॥३८६॥

भक्त्यम्बुवर्षप्रतिबन्धवशादविद्या
मृद्भावमाप्तनरभेकसमुद्दिधीर्षुः ।
यो जीवनं तदुपदेशकबन्धवृष्ट्या
तेषाञ्चकार प्रणुमो गुरुनानकं तम् ॥३८७॥

रजस्तमस्स्तोमतिरस्क्रियाञ्जनं
जगत्सु गुर्वङ्घ्रिसरोजयो रजः ।
ललाटलग्नं न करोति कं जनं
समस्तसौभाग्यविभूतिभाजनम् ॥३८८॥

विनायकादयः पञ्च ईशाः क्लेशान् हरन्तु मे ।
अविद्यादीनिमान् पञ्च कृपया दीनवत्सलाः ॥३८९॥

इति श्रीस्वामिस्वयंज्योतिकृतायां
श्रीराजयोगप्रदीपिकायां पञ्चमः प्रकाशः

इति श्रीराजयोगप्रदीपिका समाप्ता ।

श्रीकृष्णार्पणमस्तु ।
॥ श्रीरस्तु ॥

